Registered under Act XXV of 1867 (All Rights Reserved.)

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 123.*

---

# श्रीभाष्यवार्तिकम् ।

## श्रीमद्रामानुजाचार्यविशिष्टाद्वैत-
## सिद्धान्तप्रतिपादनपरम् ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा
रत्नगोपालभट्टेन संशोधितम् ।

# ŚRÎ BHÂSHYA VÂRTIKA,

A TREATISE ON VISISHTÂDVAITA PHILOSOPHY,

EDITED BY RATNA GOPÂL BHATTA.

*Fasciculus I.*

---

BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhambâ Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1906.

# सूचीपत्रम् ।

| पुस्तक | | | |
|---|---|---|---|
| गणपाठः | ० | ५ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ८ |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

श्रीगणपतये नमः ।

# श्रीभाष्यवार्तिकम् ।

श्रीहरिप्रणतिं कृत्वा रामानुजमते मया ॥
व्याससूत्रार्थबोधाय भाष्ये वार्त्तिकमुच्यते ॥ १ ॥

वृद्धव्यवहृतेरादौ शक्तेः कार्यान्विते ग्रहात् ॥
निष्पन्नब्रह्मरूपार्थे प्रामाण्यं वै कथं श्रुतेः ॥ २ ॥

नित्यानन्तफलज्ञानजन्मब्रह्मविचारणम् ॥
नारम्भणीयं तेनादावित्याशङ्क्य समुच्यते ॥ ३ ॥

ब्रह्मज्ञानफलानन्तस्थायित्वज्ञानहेतुकः ॥
व्यक्तो विचारारम्भोऽत्र सिद्धे व्युत्पत्तिदर्शनात् ॥ ४ ॥

अम्बतातादिशब्देषु बालानां पितृशिक्षया ॥
अम्बतातादिसङ्केतग्रहो लौकिकसंमतः ॥ ५ ॥

स्वाध्यायानन्तरं ज्ञात्वा ह्यनित्यफलहेतुताम् ॥
कर्मणां ब्रह्मजिज्ञासा कर्त्तव्या ब्रह्मकर्मिका ॥ ६ ॥

स्वाभाविकास्तसकलहेयानन्तगुणाकरः ॥
ब्रह्मशब्दस्य मुख्यार्थो नृहरिः पुरुषोत्तमः ॥ ७ ॥

बृहत्त्वगुणयोगेन ब्रह्मशब्दो हरौ स्मृतः ॥
बृहत्त्वं च स्वरूपेण गुणैर्यत्र हि दृश्यते ॥ ८ ॥

गुणलेशस्य संयोगादन्यत्राप्यौपचारिकः ॥
नानार्थकल्पनायोगाद्भगवच्छब्दवत् स्मृतः ॥ ९ ॥

तापत्रयातुरैः सोऽयममृतत्वाय वै हरिः ॥
जिज्ञास्य एव सर्वेशो जिज्ञासाकर्म ब्रह्म तत् ॥ १० ॥

ज्ञातुमिच्छा हि जिज्ञासा सेष्यमाणप्रधानिका ॥
तस्मादिहेष्यमाणं तज्ज्ञानमेव विधीयते ॥ ११ ॥
पूर्वमीमांसया ज्ञानं कर्माऽल्पास्थिरसत्फलम् ॥
तस्या उत्तरया ज्ञानमनन्ताऽक्षयसत्फलम् ॥ १२ ॥
ततः कर्म प्रविज्ञाय ब्रह्म ज्ञातव्यमिष्यते ॥
कर्ममीमांसया ब्रह्ममीमांसाऽभेदमश्नुते ॥ १३ ॥
तस्माच्छारीरशास्त्रेण षोडशैकस्वलक्षणम् ॥
जैमिनीयं भवेदेकविशेषार्थोपपादकम् ॥ १४ ॥
किं तद् ब्रह्म पुनर्यद् वै जिज्ञास्यं परिकीर्त्तितम् ॥
अचिन्त्यरचनस्यास्य दिक्कालनियतस्य च १५ ॥
फलभोगविशिष्टस्य क्षेत्रज्ञैः संयुतस्य हि ॥
उत्पत्तिस्थितिसंहारा जगतः सम्भवन्ति हि ॥ १६ ॥
यस्मात् सर्वेश्वरात् सत्यकल्याणगुणसागरात् ॥
सर्वज्ञात् सर्वशक्तेस्तद् ब्रह्मैवेति विनिश्चिनु ॥ १७ ॥
लक्षणानामनेकत्वाद् ब्रह्मानेकत्वमापतेत् ॥
व्यावर्त्तकं लक्षणं हि विशेषणतयोदितम् ॥ १८ ॥
प्रत्यक्षादिप्रमाणाद्यैर्यत्रैकं लक्ष्यमिष्यते ॥
तत्रैकं तद् भवति चेद् भवत्वत्र तथा न हि ॥ १९ ॥
जगज्जन्मस्थितिलया उपलक्षणरूपिणः ॥
उपलक्ष्यब्रह्मरूपं बृहद्बृंहणयोगि च ॥ २० ॥
अक्षाद्यविषयं ब्रह्म यतोऽतीन्द्रियमिष्यते ॥
अनुमानेन नो सिद्ध्यत्यनन्तगुणवान् विभुः ॥ २१ ॥
शास्त्रप्रामाणसम्बोध्यं ब्रह्म तस्माद् बृहद्गुणम् ॥
यतो वेत्यादिवाक्यानि प्रमाणं ब्रह्मनिर्णये ॥ २२ ॥
शास्त्रैकविषयं ब्रह्म यद्यपि प्रतिपादितम् ॥

प्रवृत्त्यादिपरं शास्त्रं न तद्बोधे तथाऽप्यलम् ॥ २३ ॥
इत्याशङ्क्याह तच्छास्त्रयोनित्वं ब्रह्मलक्षणम् ॥
युक्तं समन्वयाद्धेतोः पुरुषार्थे हि ब्रह्मणि ॥ २४ ॥
मुख्यवृत्त्या यतो वाक्यान्वयो ह्यत्र समन्वयः ॥
यतो वेत्यादिवाक्येन सर्वज्ञं सर्वशक्तिमत् ॥ २५ ॥
समस्तहेयरहितं कल्याणगुणसागरम् ॥
जगतः कारणं ब्रह्म जिज्ञास्यमिह बोधितम् ॥ २६ ॥
जगज्जन्मादिकर्तृ स्याद्वानुमानिकमेव यत् ॥
प्रधानं तत एवेह युक्तैकज्ञानहेतुका ॥ २७ ॥
सर्वज्ञानप्रतिज्ञाऽपि समस्तं प्राकृतं यतः ॥
इत्याशङ्क्य निराचष्टे सदेवेत्यादिवाक्यगम् ॥ २८ ॥
सत्पदं न प्रधानस्य बोधकं जडरूपिणः ॥
ईक्षतिश्रवणात् सा तु चेतने युज्यते यतः ॥ २९ ॥
तदैक्षतेति वाक्यं वै चेतनेक्षणबोधकम् ॥
सर्वज्ञः सर्वशक्तिर्यः सत्पदार्थः स एव हि ॥ ३० ॥
नच, ता आपि ऐक्षन्तेत्यादि गौणेक्षणं यथा ॥
तदैक्षन्तेत्यत्र तथा गौणमीक्षणमुच्यताम् ॥ ३१ ॥
ऐतदात्म्यमिदं सर्वं तत्सत्यं परिकीर्त्तितम् ॥
स आत्मेत्यत्र सच्छब्दवाच्यस्यात्मोपदेशतः ॥ ३२ ॥
इतोऽपि न प्रधानं तत्सच्छब्दप्रतिपादितम् ॥
सच्छब्दार्थैकनिष्ठस्य मोक्षप्राप्त्युपदेशतः ॥ ३३ ॥
न हि चेतनरूपस्याचित्सम्पत्तिः प्रयुज्यते ॥
सच्छब्दप्रतिपाद्यं स्यात् प्रधानं हि तदा पुनः ॥ ३४ ॥
श्वेतकेतोस्तदात्मत्वं हेयत्वं न वदेत् कथम् ॥
यत्रायं स्वपितिर्नाम सता सम्पन्नतां गतः ॥ ३५ ॥

स्वमपीतस्तदा सोम्य स्वपितीत्युच्यतेऽञ्जनम् ॥
स्वकारणे लयो यस्मादेवं जीवस्य वर्ण्यते ॥ ३६ ॥
अचेतनं चेतनस्य कारणं न यतो भवेत् ॥
अतः सच्छब्दवाच्यं हि प्रधानं न कथञ्चन ॥ ३७ ॥
सर्वेषां सृष्टिवाक्यानां समानार्थत्वतोऽपि च ॥
सर्वेश्वरः कारणं हि सर्ववाक्येषु वर्ण्यते ॥ ३८ ॥
श्रुतमात्रोपनिषदि सच्छब्दार्थात्मनस्तथा ॥
नामरूपादिजगतो व्याकर्तृत्वं न चान्यगम् ॥ ३९ ॥
तस्मात् प्रधानं तच्छब्दव्युत्पाद्यं न कथञ्चन ॥
भाष्यार्थस्य चतुःसूत्रीवार्त्तिकं पूर्णताङ्गतम् ॥ ४० ॥
आनन्दमयजीवो हि शारीरश्रवणाच्छ्रुतौ ॥
प्रियमोदप्रमोदादिशिरआद्यवयवी च सः ॥ ४१ ॥
ब्रह्मपुच्छं प्रतिष्ठेति स एव परिकीर्त्तितः ॥
देवादिभेदभिन्नोऽयमखण्डानन्दचिन्मयः ॥ ४२ ॥
इत्याशङ्क्य परात्मासावानन्दमय उच्यते ॥
प्रकृत्यतिशयाभ्यासाद् विस्पष्टं स तु दृश्यते ॥ ४३ ॥
सैषाऽऽनन्दस्य मीमांसेत्यारभ्योत्तरमुत्तरम् ॥
ब्रह्मावधि तदभ्यास उक्तः शतगुणो यतः ॥ ४४ ॥
अभ्यस्यमान आनन्दः कल्याणगुणसागरम् ॥
स्वाश्रयं परमात्मानमावेदयति सादरम् ॥ ४५ ॥
यद्विज्ञानमयादन्य आनन्दमय ईरितः ॥
तद्विज्ञानमयो जीवो बुद्धिमात्रं स नो भवेत् ॥ ४६ ॥
मयट्प्रत्ययसम्बन्धादुक्तत्वाद् बुद्धिभेदतः ॥
अगत्याऽऽश्रीयते स्वार्थे स तु प्राणपदोत्तरम् ॥ ४७ ॥
विज्ञानं तनुते यज्ञं कथमत्र हि केवलम् ॥

विज्ञानशब्दोपादानमत आत्मस्वरूपकम् ॥ ४८ ॥
स्वप्रकाशतयैवोक्तं विज्ञानमितिचेन्न हि ॥
ज्ञातुः स्वरूपं ज्ञानैकरूपणीयं यतस्ततः ॥ ४९ ॥
धर्मिणं धर्मशब्दो हि स्वमुखेन निरूपयेत् ॥
विज्ञानशब्दनिर्दिष्टो जीवः काण्वादिपाठतः ॥ ५० ॥
तदन्तरस्तदन्योपमानन्दमय ईश्वरः ॥
व्यासोऽपि भेदव्यपदेशादित्यनन्तरमूचिवान् ॥ ५१ ॥
नानन्दमयब्रह्मात्र जीवादन्यः कथञ्चन ॥
विकारवाचिमयटः प्रत्ययादिति तन्न हि ॥ ५२ ॥
प्राचुर्यवाचको यस्मान्मयडत्र निरूप्यते ॥
शतसंख्योऽत्र गणितः क्रमेणैवोत्तरोत्तरम् ॥ ५३ ॥
अभ्यस्यमान आनन्दो न तु जीवाश्रितो भवेत् ॥
अतो ब्रह्माश्रयोऽयं स्याद् विकारान्तो न युज्यते ॥ ५४ ॥
जीवानानन्दयत्येवं हेतोश्चैवोपदेशतः ॥
अत्रानन्दमयो ह्यात्मा जीवादन्यः प्रकीर्त्तितः ॥ ५५ ॥
मन्त्रवर्णोदितं ब्रह्म सत्यं ज्ञानमनन्तकम् ॥
जीवप्राप्यं जीवभिन्नमानन्दमयमीरितम् ॥ ५६ ॥
ननु—भेदेनोपासकात् प्राप्यं भवेद् यद्यपि निश्चितम् ॥
तथाप्युपासकस्यैव निर्विशेषं निरूप्यते ॥ ५७ ॥
स्वरूपं मन्त्रवर्णेऽत्र यतो वाचो निवर्त्तिताः ॥
इति चेन्नैव घटते विपश्चिद्ब्रह्मवर्णनात् ॥ ५८ ॥
विज्ञानमयजीवाद्वै भिन्नानन्दमयो यतः ॥
उपदिष्टस्ततो नैवं जीवात्मा युज्यतेऽपृथक् ॥ ५९ ॥
सोऽकामयतवाक्ये हि जडासंसर्गिणो हरेः ॥
कामोक्त्या न प्रधानं तत् परानन्दमयं भवेत् ॥ ६० ॥

परसङ्कल्पवशताश्चिदचिद्वस्तुतोऽखिलम् ॥
विश्वमुत्पद्यते तस्मान्न ह्यपेक्षानुमानिके ॥ ६१ ॥
जीवस्य योगं शास्तीह परानन्दमये यतः ॥
अत आनन्दमयतो जीवोऽन्य इति निर्णयः ॥ ६२ ॥
ब्रह्मपुच्छं प्रतिष्ठेति प्रणवस्याऽत्र वाचकः ॥
ब्रह्मशब्दः परेशस्य वाचकत्वात्स आश्रयः ॥ ६३ ॥
इति केचित् केचिदत्र पराकाशात्मिकां रमाम् ॥
आनन्दमयशब्दार्थां तदाधारं परात्परम् ॥ ६४ ॥
ब्रह्मपुच्छं प्रतिष्ठेति वाक्येन हरिमूचिरे ॥
पञ्चस्वात्मसमभ्यासात् पञ्च ब्रह्मेति केचन ॥ ६५ ॥
छान्दोग्ये, अन्तरादित्ये य एषो दृश्यते पुमान् ॥
हिरण्यकेशः सर्वो हि स्वर्णाङ्गः स्वर्णश्मश्रुलः ॥ ६६ ॥
कप्यासकमलाक्षश्च पाप्मभ्यः सर्वतोदितः ॥
अक्षिमण्डलमध्यस्थपुरुषो यः प्रकीर्त्तितः ॥ ६७ ॥
यस्तं वेद स सर्वेभ्यः पाप्मभ्योऽप्युदितो भवेत् ।
अक्ष्यादित्यान्तरगतः पुण्योपचयहेतुकः ॥ ६८ ॥
प्राप्तैश्वर्यः सदादित्यशब्दप्रभृतिबोधितः ॥
जीवस्तदतिरिक्तोऽत्र परमात्माऽथ वा भवेत् ॥ ६९ ॥
किं युक्तं, जीव एव स्याच्छरीरश्रवणात् किल ॥
जीवानां देहसम्बन्धः कर्मानुगुणतो यतः ॥ ७० ॥
प्रियाप्रियादिसंयोगः स तु देहं विना न हि ॥
लोककामेप्सितत्वादि जीवस्यैव यतो घटेत् ॥ ७१ ॥
विश्वसृष्टिप्रकर्तृत्वं विश्वस्यान्तःप्रवर्त्तनम् ॥
पुण्योपचितसर्वज्ञजीवमात्रे हि युज्यते ॥ ७२ ॥
अत्रोच्यते स्वसिद्धान्त आदित्याक्ष्यादि मण्डले ॥

परमात्माहरिः प्रोक्तस्तद्धर्मस्योपदेशतः ॥ ७३ ॥
एषोऽपहतपाप्मा स्यादिति जीवेष्वसम्भवन् ॥
धर्मोऽपहतपाप्मत्वप्रभृतिः परमात्मनि ॥ ७४ ॥
उपदिष्टस्ततो जीवात् पृथगक्ष्यादिमण्डले ॥
स्यादत्र परमात्मैव तत्रैवाकर्मवश्यता ॥ ७५ ॥
कर्मणा सुखदुःखादिभोगिनः परमाणवः ॥
अतोऽपहतपाप्मत्वं निरुपाधिकमीश्वरे ॥ ७६ ॥
यत्तु शरीरसम्बन्धान्न जीवेभ्यः पृथग् हरिः ॥
तदयुक्तं यतो देहः कर्मवश्यत्वमीश्वरे ॥ ७७ ॥
न साधयति तस्यैव सत्यसङ्कल्पभावतः ॥
स्वेच्छया देहसम्बन्धः सम्भवत्येव नान्यथा ॥ ७८ ॥
प्रकृतेर्विकृते रूपं भूतसङ्घातनामकम् ॥
शरीरं सत्यसङ्कल्पपुरुषस्येच्छयाऽपि न ॥ ७९ ॥
सम्बन्धोऽपुरुषार्थत्वाज्जीवानां तु स्वकर्मणा ॥
सुखदुःखादिभोगार्थं बलाद् देहोऽपि युज्यते ॥ ८० ॥
इदं तदा यदि स्याद् वै त्रिगुणः प्राकृतो हरेः ॥
देहः स तु स्वाभिमतः स्वानुरूपः सदोज्ज्वलः ॥ ८१ ॥
अप्राकृतो हरेस्तेन न दोषः कोऽपि युज्यते ॥
जीवादिमृत्युपर्यन्तं शरीरं परमात्मनः ॥ ८२ ॥
उपदिष्टं यतः श्रुत्या सदापहतपाप्मनः ॥
अतोऽक्ष्यादिसमध्यस्थो जीवादिभ्यः पृथक् प्रभुः ॥ ८३ ॥
आकाशपदवाच्यो न प्रसिद्धाकाश उच्यते ॥
आसमन्तात् काशते यः सोऽयमात्मा परेश्वरः ॥ ८४ ॥
विश्वसर्जनलिङ्गादिर्न भूते किन्तु वै हरौ ॥
अत एव प्राणशब्दः प्रसिद्धात् प्राणतः पृथक् ॥ ८५ ॥

यः प्राणयति सर्वाणि तमात्मानं वदत्ययम् ॥
छान्दोग्येऽतः परो ज्योतिर्यद् दिवो दीप्यते किल ॥ ८६ ॥
विश्वतः सर्वतः पृष्ठेषूत्तमेष्वप्यनुत्तमे ॥
यदन्तःपुरुषे ज्योतिः किमिदं लौकिकं ज्वलत् ॥ ८७ ॥
प्रसिद्धादित्यरूपं वा ब्रह्मरूपं श्रुतीरितम् ॥
तत्र युक्तं प्रसिद्धं न किन्तु स्याद् ब्रह्म सुन्दरम् ॥ ८८ ॥
सर्वभूतानि पादोऽस्य त्रिपादस्याऽमृतं दिवि ॥
इत्येव चरणानां हि श्रुतिवाक्योपदेशतः ॥ ७६ ॥
द्युसम्बन्धि परं ज्योतिर्हरिरूपं निगद्यते ॥
गायत्रीपदवाच्यं न छन्दः किन्तु हरिः स्वयम् ॥ ९० ॥
सर्वात्मकत्वं नो युक्तं छन्दसः किन्तु तद्धरेः ॥
चेतोऽर्पणत्वसाम्येन गायत्रीपदमीरितम् ॥ ९१ ॥
भूतभूदेहहृदयां निर्दिश्यैवं चतुष्पदाम् ॥
व्यपदेश इति श्रुत्या ब्रह्मण्येवोपपद्यते ॥ ९२ ॥
उपदेशभेदान्न ब्रह्म प्रोच्यतेऽत्रेति चेन्न हि ॥
देवः परो दिवीत्येवमुभयत्राविरोधतः ॥ ९३ ॥
प्राणोऽस्म्यहं तं मामायुरमृतं हीत्युपास्व च ॥
किमत्रेन्द्रप्राणशब्दनिर्दिष्टो जीव एव वा ॥ ९४ ॥
तद्भिन्नः परमात्मेति तत्र जीवः प्रसिद्धितः ॥
इति प्राप्ते प्राणशब्दानिर्दिष्टो हरिरेव हि ॥ ९५ ॥
प्राण एष हि प्रज्ञात्मा परानन्दोऽजरोऽमृतः ॥
इत्येवं व्यपदेशो हि न जीवे युज्यते यतः ॥ ९६ ॥
मामायुरिति वक्ता हि त्वाष्ट्रहन्ता शचीपतिः ॥
विज्ञातजीवभावोऽसौ स्वोपास्यत्वमुपादिशत् ॥ ९७ ॥
प्रतर्दनाय जीवोऽत इति तत्परिहीयते ॥

चेतनाऽचेतनं वस्तुप्रज्ञाभूतद्वयोक्तिभिः ॥ ९८ ॥
प्रतिपाद्य तदाधारो जीवान्यो हरिरेव हि ॥
समग्रवस्त्वाधारत्वं न जीवे युज्यते यतः ॥ ९९ ॥
प्रज्ञातजीवभावेन मामेवैति यदुच्यते ॥
न तन्मानान्तरप्राप्तस्वात्मदृष्ट्या प्रयुज्यते ॥ १०० ॥
किन्तु शास्त्रात् स्वकीयात्मदृष्ट्या त्वाष्ट्रारिणोच्यते ॥
वामदेवः परस्यात्र सर्वात्मत्वस्य निश्चयात् ॥ १०१ ॥
शरीरवाचिशब्दानां सम्प्रवृत्तिं शरीरिणि ॥
पश्यन् यथा मनुरहं सूर्योऽहमभवं परः ॥ १०२ ॥
स्वात्मदेहं परं ब्रह्म निर्दिश्येत्यवदत् तथा ॥
मामितीन्द्रोवदत्येवं स्वात्मदेहं परात्परम् ॥ १०३ ॥
प्राणो वसति यावद्धि तावदायुः शरीरके ॥
प्राण एव हि प्रज्ञात्मा शरीरं परिगृह्य वै ॥ १०४ ॥
इदमुत्थापयत्येवं मुख्यप्राणादिलिङ्गतः ॥
अध्यात्मयोगभूमेह नेतिचेन्नैव युज्यते ॥ १०५ ॥
स्वरूपेणानुसन्धानं जगत्कारणब्रह्मणः ॥
भोक्तृवर्गशरीरित्वाऽनुसन्धानं पुनस्तथा ॥ १०६ ॥
भोग्यभोगोपकरणशरीरित्वेन तद्धरेः ॥
एवं त्रिधानुसन्धानात् प्राणादिपदजातयः ॥ १०७ ॥
परब्रह्मात्मपर्यन्ताः पर्यवस्यन्ति निश्चितम् ॥
अतः प्राणादिशब्दार्थः सर्वत्र नृहरीश्वरः ॥ १०८ ॥

इति श्रीभाष्यवार्तिके प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

---

प्रथमे चरणे सर्वप्रमाणागम्यरूपकः ॥
सर्वज्ञः सत्यसङ्कल्पामितोदारगुणाकरः ॥ १ ॥
स्वभिन्नाखिलवस्तुभ्यो भिन्नः सर्वोत्तमो हरिः ॥
सर्ववेदान्तसंवेद्यः सादरं विनिरूपितः ॥ २ ॥
द्वितीयतृतीयतुर्यचरणेषु च यद्यपि ॥
वेदान्तवेद्यं ब्रह्मैव सुनिरूप्यं तथापि हि ॥ ३ ॥
प्रधानात्मपराणां तन्निराकरणपूर्वकम् ॥
अनन्तकल्याणगुणं ब्रह्माऽत्र प्रतिपाद्यते ॥ ४ ॥
तत्र द्वितीये ह्यस्पष्टजीवलिङ्गानि यानि च ॥
वाक्यानि सुविचार्यन्ते स्पष्टलिङ्गान्यथोत्तरम् ॥ ५ ॥
किन्तु मनोमयत्वादिगुणो जीवोऽथवा परः ॥
तत्र युक्तं जीव एव मनःप्राणादियोगतः ॥ ६ ॥
अप्राणो ह्यमना ईश इति तस्य निषेधतः ॥
इत्याशङ्क्य परेशस्य प्रसिद्धस्योपदेशतः ॥ ७ ॥
सर्वत्रातः परं ब्रह्म समुपास्यतयोच्यते ॥
मनोमयत्वादिगुणो यतोऽयं स्यान्मनोमयः ॥ ८ ॥
एषोऽन्तर्हृदयाकाशस्तस्मिन् संराजतेऽमृतः ॥
अप्राणो ह्यमनावाक्यं प्राणायत्तां स्थितिं तथा ॥
ज्ञानं च मनआयत्तं निषेधति परेश्वरे ॥ ९ ॥
अथवा खल्विदं ब्रह्म सर्वं वै तज्जलानिति ॥
शान्तः सम्यगुपासीतेत्येवोपासा विधीयते ॥ १० ॥
अतः सर्वात्मकं ब्रह्म शान्तः सन्, सेव्यतां बुधाः ॥
अत्राऽयं संशयो ब्रह्मशब्देनात्मा किमुच्यते ॥ ११ ॥
उत किं परमात्मेति तत्र जीवो हि युज्यते ॥
कुतस्तस्यैव सामानाधिकरण्यं यतोऽवदत् ॥ १२ ॥

सर्वशब्दस्य तेनाऽयं ब्रह्मादि सकलं जगत् ॥
ब्रह्मादिभावोऽनाद्यविद्यामूलकर्माद्युपाधितः ॥ १३ ॥
विद्यते न परेशस्य सर्वतो गतपाप्मनः ॥
अविद्यादिदोषगन्धहीनस्याचिन्त्यमायिनः ॥ १४ ॥
जगज्जन्मस्थितिलया जीवकर्मनिमित्तकाः ॥
तज्जलानिति हेतोर्वै जीवेऽतो योग्यता भवेत् ॥ १५ ॥
तस्माज्जीवात्मनिर्देशस्तत्र सिद्धान्त उच्यते ॥
वेदान्तवाक्ये सर्वत्र प्रसिद्धस्य परात्मनः ॥ १६ ॥
उपदेशात् प्रत्यगात्मा वक्तुं नैवोपयुज्यते ॥
इदं सर्वं नु ब्रह्मेति सर्वस्मिञ्जगतीश्वरः ॥ १७ ॥
निर्दिष्टो ब्रह्मशब्देन सर्वस्यात्मतयैव हि ॥
प्रसिद्धेशोपदेशाद् वै तज्जलानिति हेतुतः ॥ १८ ॥
ब्रह्मणः सर्वमुत्पन्नं सर्वं ब्रह्मणि लीयते ॥
ब्रह्माधीनं जीवनं च सर्वस्येति विनिश्चयात् ॥ १९ ॥
ब्रह्मात्मकं सर्वमिदमतो ब्रह्मात्र पठ्यते ॥
ईशात् सर्वस्य जातत्वाल्लीनत्वात् तेन जीवनात् ॥ २० ॥
सर्वात्मकतया सर्वैस्तादात्म्यं परमेश्वरे ॥
उपासीतेदृशं ब्रह्म शान्तो भूत्वेति निश्चयः ॥ २१ ॥
पूर्वं सूक्ष्मचिदचिद्भ्यां विशिष्टं कारणात्मकम् ॥
स्थूलचिदचिद्विशिष्टं कार्यावस्थं तदुच्यते ॥ २२ ॥
कारणं कार्यरूपात्माऽवस्थान्तरतां गतम् ॥
एवं सर्वात्मतादात्म्यप्रतिपादनतो हरौ ॥ २३ ॥
सर्वहेयप्रतिद्वन्द्विकल्याणगुणसङ्गतिः ॥
न विरुध्यते हि देहस्था दोषा देहप्रकारिणि ॥ २४ ॥
न प्रसज्जन्ति किन्त्वेव गुणा वै परमेश्वरे ॥

नच सर्वत्र तादात्म्यं जीवानामपि युज्यते ॥ २५ ॥
प्रतिदेहं प्रभिन्नानां तादात्म्यं न परस्परम् ॥
अनवच्छिन्नरूपस्य मुक्तस्यापि न युज्यते ॥ २६ ॥
यतो जीवेषु तादात्म्यं जगज्जन्मादिहेतुता ॥
जगद्व्यापारवर्जेति सूत्रकृद्भिर्निषिद्ध्यते ॥ २७ ॥
विवक्षितगुणाश्चात्र सत्यसङ्कल्पतादयः ॥
मनोमयप्राणदेहभारूपत्वादिसंयुताः ॥ २८ ॥
परात्मन्येव युज्यन्ते न जीवेषु कथञ्चन ॥
योऽप्रतिहतसङ्कल्पः सत्यसङ्कल्प एव सः ॥ २९ ॥
प्राणानां धारकः प्राणशरीरी हरिरुच्यते ॥
देहशब्दप्रवृत्तौ हि चेतनाचेतनद्वये ॥ ३० ॥
आधेयत्वविधेयत्वशेषत्वानि परं प्रति ॥
निमित्तानि यथायोग्यमग्रे सम्यग् वदिष्यति ॥ ३१ ॥
यतोऽस्य दुःखसम्बन्धो देहसङ्गनिबन्धनः ॥
खद्योतकल्पस्येशानादुदारगुणसागरात् ॥ ३२ ॥
गुणलेशस्य सम्बन्धः शारीरस्य न युज्यते ॥
अतोऽत्र ग्रहणे शङ्का प्रकरणेऽस्य न जायते ॥ ३३ ॥
इतः प्रेत्याभिगन्तैतामितिवाक्यात् परेश्वरः ॥
प्राप्यत्वेन विनिर्दिष्टो जीवोऽयं प्रापकस्तथा ॥ ३४ ॥
अतोऽपि जीवभिन्नोऽत्र परेशः परिगृह्यते ॥
एष मे इति वाक्येन षष्ठ्या जीवो ह्युपासकः ॥ ३५ ॥
ईशः प्रथमयोपास्यो निर्दिष्ट इतिशब्दतः ॥
विशेषाद्धरिरेवात्र प्रकरणे परिपठ्यते ॥ ३६ ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥
स्मृतिरित्थं परं भिन्नं जीवस्य हृदयेऽवदत् ॥ ३७ ॥

एष म इति वाक्येन ह्यणीयसि हृदि स्थितः ॥
अतोऽणीयान् यवो व्रीहिर्वेत्यणीयस्त्वतस्त्वयम् ॥ ३८ ॥
जीव एव भवेदत्रापरिच्छिन्नः परो न हि ॥
सिद्धान्तस्तु परोऽणीयानुपास्यत्वेन युज्यताम् ॥ ३९ ॥
अस्य रूपमणीयस्त्वं केवलं नैव युज्यते ॥
व्योमवद् व्यपदेशाद्यैर्महत्त्वस्य स्वभावतः ॥ ४० ॥
अतोऽल्पत्वोपदेशोऽयमुपासार्थो भवेद् ध्रुवम् ॥
जीवस्येव परस्यापि देहान्तर्वर्त्तितास्ति चेत् ॥ ४१ ॥
सुखदुःखोपभोगस्तु तत्सङ्गात्तर्हि किन्न हि ॥
इतिचेन्नैव तत्सङ्गात् सुखदुःखादिभोक्तृता ॥ ४२ ॥
किन्तु कर्मपराधीनप्रयुक्तात्मनि भोक्तृता ॥
परात्मनि कथं सा स्यात् कर्माधीनत्वहानितः ॥ ४३ ॥
यस्य वै ब्रह्म च क्षत्रं चोभे भवत ओदने ॥
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ ४४ ॥
अत्रौदनादिपदतः सूचितोऽत्ता भवेद्धि कः ॥
जीवः किं वा परो वेति युक्तो जीवो हि भोक्तृतः ॥ ४५ ॥
तस्य कर्मनिमित्तत्वाज्जीवेष्वेव हि सम्भवात् ॥
अत्रोच्यतेऽत्ता परमः कृत्स्नभोक्ता यतो हरिः ॥ ४६ ॥
नेदं तु कर्मणा शङ्क्यं भोगवैजात्यतो हरेः ॥
जगज्जन्मास्थितिलयहेतौ हन्तृत्वमेव यत् ॥ ४७ ॥
भोक्तृत्वं तत्परं विद्याद् विष्णुनिष्ठं नचात्मनि ॥
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ४८ ॥
इत्यादौ दर्शनादस्य सर्वात्ता हरिरेव सः ॥
मृत्युर्यस्येति वचनाच्चराचरमिदं जगत् ॥ ४९ ॥
अदनीयौदनत्वेन ब्रह्मक्षत्रोपलक्षितम् ॥

अद्यमानं सदन्यस्याऽदनहेतूपसेचनम् ॥ ५० ॥
मृत्योरप्यद्यमानत्वं ततस्तदुपसेचनम् ॥
हन्तृत्वरूपं भोक्तृत्वं तस्मात् सर्वस्य वै हरौ ॥ ५१ ॥
इदं प्रकरणं विष्णोस्तस्माज्जीवे न चाऽत्तृता ॥
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ५२ ॥
न मेधया प्रवचनाद् भूयसाऽपि श्रुतेन च ॥
लभ्योऽयमेषो वृणुते तेनैवेति प्रसादतः ॥ ५३ ॥
हरिप्राप्तिः प्रस्तुताऽतो हरिरत्र न संशयः ॥
क इत्थेत्यपि वाक्येन तत्प्रसादादृते हरेः ॥ ५४ ॥
दुर्बोधत्वं प्रस्तुतं यत्र प्रत्यभिज्ञायते तु तत् ॥
ब्रह्मक्षत्रोदनपदात् सूचितः पुरुषोत्तमः ॥ ५५ ॥
परापहतपाप्माऽयं तदनन्तरमुच्यते ॥
ऋतं पिबन्ताविति तौ बुद्धिप्राणौ शरीरिणः ॥ ५६ ॥
भोगोपकरणौ यस्मादेकप्रकरणत्वतः ॥
प्रस्तुतोऽत्रापि जीवात्मा स एवाऽर्हो निरूपणे ॥ ५७ ॥
अत्रोच्यते बुद्धिजीवौ प्राणजीवौ न वा गुहा ॥
प्रविष्टावृतभोक्तारावुच्येते किन्तु ताविह ॥ ५८ ॥
जीवात्मपरमात्मानौ व्यपदेशस्य दर्शनात् ॥
गूढं गुहाहितं तत्रानुप्रविष्टं पुरातनम् ॥ ५९ ॥
इत्थं गुहाप्रवेशोऽत्र परेशे व्यपदिश्यते ॥
गुहां प्रविश्य तिष्ठन्ती प्राणेन सह साऽदितिः ॥ ६० ॥
अत्ति कर्मफलानीत्थमदितिर्जीव उच्यते ॥
एवं गुहाप्रवेशोऽपि जीवात्मन्युपदिश्यते ॥ ६१ ॥
अच्छत्रिच्छत्रिगमने यथा गच्छन्ति छत्रिणः ॥
इत्येवं व्यवहारोऽस्ति लक्षणावृत्तितस्तथा ॥ ६२ ॥

ऋतं पिबन्ताविति हि व्यपदेशः प्रपद्यताम् ॥
यद्वा पाने हि कर्तृत्वं प्रयोज्यं जीववर्गगम् ॥ ६३ ॥
प्रयोजकं परेशे तद् द्वौ पिबन्तौ भवेदिति ॥
उपास्योपासकभावात् प्राप्यप्रापकभावतः ॥ ६४ ॥
सर्वत्र प्रतिपाद्येते जीवात्मपरमेश्वरौ ॥
ब्रह्मजज्ञं देवमीड्यमित्यादिश्रुतिवाक्यतः ॥ ६५ ॥
छायातपाविवाप्यस्मिन्नज्ञज्ञौ तौ निरूपितौ ॥
उपक्रमाद्धि जीवस्य नेदं प्रकरणं भवेत् ॥ ६६ ॥
केचिच्चिन्मात्रजीवस्य स्वरूपोच्छित्तिलक्षणम् ॥
मोक्षमाचक्षते केचिद् ह्यविद्यास्तमयः परः ॥ ६७ ॥
जडपाषाणरूपस्य विशेषगुणरूपिणाम् ॥
ज्ञानादीनां समुच्छेदलक्षणं मोक्षमूचिरे ॥ ६८ ॥
यदुपाधिनिमित्तो हि जीवभावः परेश्वरे ।
तदुच्छेदं परं मोक्षं केचिदाचक्षते बुधाः ॥ ६९ ॥
विलक्षणस्य सर्वात्मभूतस्य परमात्मनः ॥
शरीरत्वात् प्रकारस्य जीवस्यानादिकर्मणा ॥ ७० ॥
अविद्यारूपिणा छिन्नरूपस्य भवभोगिनः ॥
परात्मानुभवो यः स्यादविद्योच्छेदपूर्वकः ॥ ७१ ॥
मोक्षः प्रख्यायते धीरैः सिद्धान्तमतवेदिभिः ॥
मोक्षं ससाधनं विद्यामिति प्रश्नोत्तरे पुनः ॥ ७२ ॥
परात्मतत्त्वविज्ञानं परात्मोपासनं तथा ॥
परात्मपदसम्प्राप्तिलक्षणं मोक्षमूचिवान् ॥ ७३ ॥
तस्मादत्र परात्मैव प्राप्यो जीवेन वर्णितः ॥
एष आत्मेति होवाच य एषो दृश्यतेऽक्षिणि ॥ ७४ ॥
एतद् ब्रह्माऽमृतमयमभयं तत्र संशयः ॥

अक्ष्याधारतया योऽयं निर्दिष्टः पुरुषः स किम् ॥ ७५ ॥
प्रतिबिम्बस्वरूपो वा चक्षुरध्यक्षदेवता ॥
जीवात्मा परमात्मा वा भवतीत्यत्र वर्ण्यते ॥ ७६ ॥
युक्तोऽत्र प्रतिबिम्बात्मा निर्देशः सिद्धवद् यतः ॥
अपरोक्षदृशिनोक्तत्वाज्जीवात्मा वाऽपि युज्यते ॥ ७७ ॥
सन्निधानाद् विशेषेण प्रसिद्धिश्चक्षुरिन्द्रिये ॥
मीलितं चक्षुरुद्वीक्ष्य निश्चिन्वन्ति सुरश्मिभिः ॥ ७८ ॥
जीवात्मनः स्थितिगती शरीरेऽस्मिन् प्रतिष्ठितः ॥
अयमित्थं प्रसिद्ध्याऽत्र चक्षुरध्यक्षदेवता ॥ ७९ ॥
विशेषो वेति सम्प्राप्ते परमात्मेति निश्चयः ॥
एतद् ब्रह्माऽमृतमयं संयद्वामः प्रचक्ष्यते ॥ ८० ॥
अभिसंयति वामानि सर्वाण्येतं स वामनिः ॥
एष सर्वाणि वामानि नयतिं ह्येव भामनिः ॥ ८१ ॥
एष सर्वेषु लोकेषु भातीत्येवं गुणाः किल ॥
परमात्मनि युज्यन्ते न जीवे देवतासु च ॥ ८२ ॥
स्थितिर्नियमनं चापि परमात्मन एव हि ॥
तिष्ठन् यश्चक्षुषीत्यादिश्रुतिवाक्येन पठ्यते ॥ ८३ ॥
योगिभिः पश्यमानत्वाद् दृश्यर्थोऽपि न दुर्लभः ॥
कं खं ब्रह्मेति प्रकृतात् सुखिब्रह्मनिरूपणात् ॥ ८४ ॥
संयद्वामत्वप्रभृतिगुणाधानार्थमेव च ॥
उपासास्थानसिद्ध्यर्थमाक्षिण्येषोऽभिनीयते ॥ ८५ ॥
नन्वग्नयः समग्नीनां कं खं ब्रह्मेति वाक्यतः ॥
उपासनं वदन्तीति ब्रह्म नेहोपदिश्यते ॥ ८६ ॥
नचेह ब्रह्मविद्याङ्गमग्निविद्येति शङ्क्यताम् ॥
द्वितरोधफलप्राप्तिश्रवणादितिचेन्न तव ॥ ८७ ॥

ब्रह्मसंशब्दनात् पापलेपाऽभावोक्तितोऽपि च ॥
संयद्वामत्वप्रभृतिकल्याणगुणशालिनः ॥ ८८ ॥
अक्षिस्थानोपास्यताया अर्चिरादिगतेस्तथा ॥
उपदेशात् सुखि ब्रह्म परमत्राभिधीयते ॥ ८९ ॥
नात्रोच्यते ब्रह्म किन्तु प्रसिद्धे खे च लौकिके ॥
सुखे कुर्याद् ब्रह्मदृष्टिरित्याशङ्क्य समुच्यते ॥ ९० ॥
अत एव च स ब्रह्म कं यदेव तदेव खम् ॥
इति वाक्यात् सुखाकाशं परं ब्रह्माभिधीयते ॥ ९१ ॥
अक्ष्याधारोऽत्र पुरुषस्ततोऽपि प्रतिपाद्यते ॥
तद्याथात्म्यविदो यस्मादर्चिरादिगतेर्वचः ॥ ९२ ॥
नियमेनाक्षिसंस्थाना न च्छायाजीवदेवताः ॥
नराऽन्तराऽसंनिधानाच्छाया नैवाऽक्षिणि यतः ॥ ९३ ॥
व्यापारानुगुणत्वाय मिलितेन्द्रियसंश्रिते ॥
स्थाने स्थितिर्हि जीवानां केवलं नैव चक्षुषि ॥ ९४ ॥
रश्मिद्वारा देवताया यतः संस्थितिरुच्यते ॥
अतो देशान्तरस्थाया अक्षिण्यप्याश्रयो भवेत् ॥ ९५ ॥
तस्माच्चक्षुष्यवस्थानममृतत्वाऽऽदयोऽपि च ॥
निरुपाधिकता ह्येषां परात्मन्येव सम्भवेत् ॥ ९६ ॥
अत्रस्थितिर्नियमनं वर्णितं यत् परात्मनि ॥
समर्थयंस्तदेवाह सूत्रेऽन्तर्यामिवर्णके ॥ ९७ ॥
समामनन्ति काण्वा वै तथा माध्यन्दिनाश्च ये ॥
तिष्ठन् पृथिव्यामात्मा यः पृथिव्या अन्तरो ह्ययम् ॥ ९८ ॥
पृथिवी यं न वेदेति शरीरं यस्य सा भवेत् ॥
अन्तर्यस्तां यमयति सोऽन्तर्याम्येष ते हरिः ॥ ९९ ॥
एवं जलाग्न्यन्तरिक्षवाय्वादित्यदिशासु च ॥

आकाशचन्द्रतारासु तमस्तेजःसुरेषु च ॥ १०० ॥
सर्वभूतेषु वाक्प्राणचक्षुःश्रोत्रमनःसु च ॥
विज्ञानत्वक्षु रेतःसु तिष्ठन्नात्मसु योऽन्तरः ॥ १०१ ॥
उपदिष्टः किमात्मा वा परात्मा वेति संशये ॥
प्रत्यगात्मा भवेदत्र वाक्यशेषबलादयम् ॥ १०२ ॥
तथाहि द्रष्टा श्रोतेति करणायत्तबुद्धिमान् ॥
श्रुताऽन्तर्यामिता तस्माद् द्रष्टुरेवोपदिश्यते ॥ १०३ ॥
अतोऽन्यो नास्ति द्रष्टेति द्रष्ट्रन्तरनिषेधतः ॥
इति प्राप्तेऽधिदैवादिलोकेष्वात्मा हरिः स्वयम् ॥ १०४ ॥
अन्तर्यामी न जीवात्मा तद्धर्मस्योपदेशतः ॥
तद्धर्मः सर्वलोकादिनियन्तृत्वं कुतोऽन्यगम् ॥ १०५ ॥
अन्तः प्रविश्य सर्वेषां सर्वदेहप्रकारभाक् ॥
सर्वैरवेद्यः सर्वात्मा शास्ता सर्वजनेश्वरः ॥ १०६ ॥
पर एव भवेन्नान्यो जीवादिर्वा न संशयः ॥
करणायत्तबुद्धित्वं न च किन्तु स्वतो हरेः ॥ १०७ ॥
पश्यत्यचक्षुरित्यादिश्रुतिभिः प्रतिपाद्यते ॥
सर्वात्मत्वं नियन्तृत्वं सर्वदेहत्वमीश्वरे ॥ १०८ ॥
अमृतत्वं स्वभावेन जीवेषु परतन्त्रतः ॥
अन्तर्यामी ततो लोके परमात्मैव गीयते ॥ १०९ ॥
श्रोताऽश्रुतो तथाऽदृष्टो द्रष्टेत्युत्तरवाक्यतः ॥
निषिध्यते नियन्तुस्तान्नियन्त्रन्तरमित्यतः ॥ ११० ॥
वाच्यः स्याद् युष्मदस्मद्भ्यां नृहरिः पुरुषोत्तमः ॥
जीवस्तथा प्रधानं वै नान्तर्यम्यत्र गीयते ॥ १११ ॥
सर्वद्रष्टुर्हि सर्वस्य नियन्तृत्वं तदात्मता ॥
स्वत एवाऽमृतत्वं च सम्भवत्येव नो तयोः ॥ ११२ ॥

अचेतनप्रधानस्य सर्वज्ञत्वादि नार्हति ॥
अल्पज्ञस्यपिजीवस्य तथा तन्नोपयुज्यते ॥ ११३ ॥
अतोऽमीषां गुणानां वै परात्मनि समन्वयः ॥
अन्तर्यामिनियम्यत्वं वागादिभिश्चेतनैः ॥ ११४ ॥
सममस्मिन्नधीयाते काण्वमाध्यन्दिनावुभौ ॥
तिष्ठन्नात्मनि यस्यात्मा शरीरं यं न वेद सः ॥ ११५ ॥
यमन्तरो यमयति विज्ञानेऽप्येवमेव सः ॥
अतो विलक्षणो जीवादन्तर्यामी समीरितः ॥ ११६ ॥
अथर्वणे हि द्वे विद्ये परापरतयेरिते ॥
अक्षराधिगमे हेतुः परविद्या प्रकीर्तिता ॥ ११७ ॥
यत् तदद्दश्यमग्राह्यमगोत्रावर्णमीरितम् ॥
अपाणिपादमश्रोत्रं नित्यं सर्वगतं विभु ॥ ११८ ॥
यद् भूतयोनिं सूक्ष्मं तत् परिपश्यन्ति साधवः ॥
उत्तरत्राऽप्यदो वाक्यमक्षरात् परतः परः ॥ ११९ ॥
इमौ प्रधानपुरुषौ परमात्माऽथवाऽत्र किम् ॥
युक्तं प्रधानपुरुषौ द्रष्टृत्वादेरवर्णनात् ॥ १२० ॥
विकारभूतात् सर्वस्मात् परभूतात् तथाऽक्षरात् ॥
परः समष्टिपुरुषः क्षेत्रज्ञः प्रतिपाद्यते ॥ १२१ ॥
स्थूलरूपादिमद्भूतनिष्ठत्वेन निवारितम् ॥
तददृश्यत्वमिदं सूक्ष्मे पर्यवस्यत्यचेतने ॥ १२२ ॥
तच्च प्रधानमेव स्यात् समष्टिपुरुषे तथा ॥
तत्परत्वमतस्तेनाधिष्ठितं यत् प्रधानकम् ॥ १२३ ॥
सूते विकारजातं तन्महदाद्यखिलं जगत् ॥
तस्मात् प्रधानपुरुषाविति प्राप्तेऽभिधीयते ॥ १२४ ॥
अदृश्यत्वादिगुणको ह्यक्षरात् परतः परः ॥

पुरुषोत्तम एवोक्तस्तद्धर्मोक्तिप्रभावतः ॥ १२५ ॥
सर्वज्ञसर्वविद्वाक्यात् सर्वज्ञत्वादिकास्तु ये ॥
उच्यन्ते ते परस्यैव धर्मास्तद्धर्मिणः सदा ॥ १२६ ॥
यथेतिश्रुतिवाक्याच्चादृश्यत्वगुणकाक्षरम् ॥
अभिधायाक्षराद् विश्वं भवतीति विधाय च ॥ १२७ ॥
सर्वज्ञः सर्वविद् यस्य तपो ज्ञानमयं ततः ॥
तद् ब्रह्म नाम रूपं च जायते भूतयोनितः ॥ १२८ ॥
अक्षरादिति तस्यैव सर्वज्ञत्वादि वर्ण्यते ॥
परत्वस्याऽक्षरादुक्त्या भूतसूक्ष्ममचेतनम् ॥ १२९ ॥
ब्रूतेऽत्राक्षरशब्दो हि न तु तद्गुणवत् परम् ।
प्रधानपुरुषाभ्यां च परत्वाख्यविशेषणात् ॥ १३० ॥
तथैव भेदव्यपदेशाददृश्यत्वगुणः परः ।
अव्याकृताक्षराद्भिन्नः समष्टिपुरुषोऽस्ति यः ॥ १३१ ॥
अदृश्यत्वादिगुणकस्तस्मादपि परो हरिः ॥
अग्निमूर्द्धेत्युपक्रम्य रूपोपन्यासहेतुतः ॥ १३२ ॥
सर्वभूतान्तरात्मैव निर्णीतो नेतरौ च तौ ॥
तस्माद् वेदान्तवाक्यानां तात्पर्यं सगुणे हरौ ॥ १३३ ॥
वैश्वानरं म आत्मानं ब्रूहीत्येवमुपक्रमः ॥
यस्त्वेतमेवं प्रादेशमात्रं वैश्वानरं हृदि ॥ १३४ ॥
उपास्त इति संहारस्तत्र संशय ईरितः ॥
वैश्वानरः किमात्मायं परमात्माऽथवाऽत्र किम् ॥ १३५ ॥
युक्तमात्मैव संग्राह्यो यतोऽशक्यविनिर्णयः ॥
वैश्वानरस्य शब्दस्य प्रयोगोऽर्थचतुष्टये ॥ १३६ ॥
तत्रादौ जाठराग्निर्वै वैश्वानरपदोदितः ॥
येनेदं पच्यतेऽन्नं हि घोषोऽयं तस्य दृश्यते ॥ १३७ ॥

कर्णद्वयं पिधायापि यं शृणोति नरः सदा ॥
इत्यादिलिङ्गजातानि नेतुं नाऽऽत्मनि शक्यते ॥ १३८ ॥
इति प्राप्ते परात्मैव वैश्वानरपदोदितः ॥
यतः साधारणैर्द्धर्मैः पर एव विशेष्यते ॥ १३९ ॥
यथेषिकातूलमग्नौ प्रोतं सर्वं प्रदूयते ॥
तथाऽस्य सर्वे पाप्मानः प्रदूयन्ते हि सर्वशः ॥ १४० ॥
दिवः प्रभृति भूम्यन्तं रूपं वैश्वानरस्य यत् ॥
उपदिष्टं तद् घटते परमात्मनि नान्तरे ॥ १४१ ॥
अन्तःस्थजाठरस्याग्नेः प्रतीतिरितिचेन्न हि ॥
त्रैलोक्यसुशरीरस्य ब्रह्मणस्तच्छरीरिणः ॥ १४२ ॥
उपासनोपदेशाद् वै तद्विशिष्टस्य निश्चयात् ॥
अतो न देवता चात्र न भूतं नापि जाठरः ॥ १४३ ॥
जाठराग्निशरीरत्वात् तद्विशिष्टपरात्मनः ॥
अग्निशब्दे वाचकत्वमुपास्यत्वं च वर्णितम् ॥ १४४ ॥
जैमिनिस्त्वग्निशब्दस्य वैश्वानरसुशब्दवत् ॥
परात्मनो वाचकत्वं साक्षादेवाभिमन्यते ॥ १४५ ॥
साधारणोऽप्ययं शब्दो जाठराग्न्यादिवाचकः ॥
तथापि विश्वनारस्य नेतृत्वादिगुणात्मना ॥
असाधारणधर्मेण वाचकः परमात्मनः ॥ १४६ ॥
यस्त्वेतमेवं प्रादेशमात्रमित्यादिनोदितः ॥
अपरिच्छिन्नरूपस्य परिच्छेदः कथं भवेत् ॥ १४७ ॥
तत्राश्मरथ्यो वदति व्यक्त्यर्थं सेवकं प्रति ॥
उपासार्थं परेशस्य प्रादेशत्वादि युज्यते ॥ १४८ ॥
कृत्स्नं व्याप्तवतो मानरहितस्याभिव्यक्तये ॥
द्युम्वादिप्रदेशसम्बन्धपरिच्छिन्नत्वमात्मनः ॥ १४९ ॥

मूर्द्धाद्यवयवधर्मः परस्य घटते न चेत् ॥
उपासनार्थमाहायमाचार्यो बादरिः स्वयम् ॥ १५० ॥
वैश्वानरः परात्माऽयं तस्यैवोपासकैः सदा ॥
क्रियमाणोपासनस्य स्वप्राणाहुतिरूपिणः ॥ १५१ ॥
अग्निहोत्रत्वभावाय द्युमूर्द्धाद्युपवर्ण्यते ॥
प्राणाहुत्यास्ततो हेतोः परात्मोपासनोचितम् ॥ १५२ ॥
फलं श्रुतिर्दर्शयति जैमिनिस्त्विति मन्यते ॥
द्युमूर्द्धत्वादिसंयुक्तं वैश्वानरमिमं त्विह ॥ १५३ ॥
प्राणाहुत्याधारतायां उपासककलेवरे ॥
आमनन्तीति निर्णीतो वैश्वानरपरेश्वरः ॥ १५४ ॥

इति श्रीभाष्यवार्तिके प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥



यस्मिन् द्यौस्तथा भूमिरन्तरिक्षं मनः सह ॥
प्राणैरोतं तमेवैकं जानथात्मानमादरात् ॥ १ ॥
विमुञ्चथान्या वाचो वै सेतुरेषोऽमृतस्य तु ॥
संशयस्तत्र किमयं द्युभ्वाद्यायतनश्रुतः ॥ २ ॥
जीवात्मा परमात्मा वा किं युक्तं जीव एव हि ॥
नाड्याधारत्वबहुधा जायमानत्वतस्तथा ॥ ३ ॥
प्राणपञ्चकसम्बन्धान्मनसश्चाश्रयत्वतः ॥
द्युभ्वाद्यायतनत्वस्य कर्मणा चात्र सम्भवात् ॥ ४ ॥
इति प्राप्ते परात्मैव द्युभ्वाद्यायतनो हरिः ॥
सेतुरेषोऽमृतस्येति परधर्मोपदेशतः ॥ ५ ॥
मुक्तिरूपाऽमृतस्यायं प्रापकः सेतुरुच्यते ॥
मुक्तोपसृप्योपदेशाद् द्युभ्वाद्यायतनो हरिः ॥ ६ ॥
यदा पश्येत्यादिवाक्यान्मुक्तप्राप्यतयोदितः ॥
प्रधानं प्राणभृदपि नात्र प्रकरणे द्वयम् ॥ ७ ॥
तद्वाचकवचोभावादतोऽपि परमेश्वरः ॥
भेदस्य व्यपदेशात्तु जीवात्मपरमात्मनोः ॥ ८ ॥
पराऽभिन्नोऽत्र जीवात्मा द्युभ्वाद्यायतनो न हि ॥
प्रकरणादपि परं परात्मैव निरूप्यते ॥ ९ ॥
अदृश्यत्वे तु सूत्रे वै परप्रकरणोक्तितः ॥
सहस्थितेः कर्मफलानशनाशनबोधनात् ॥ १० ॥
जीवप्राप्यफलात्मैव द्युभ्वाद्यायतनो भवेत् ॥
भूमा किं प्रत्यगात्मा स्यात् परमात्मेति संशये ॥ ११ ॥
किं युक्तं प्रत्यगात्मैव प्राणाऽध्यध्युपदेशतः ॥
प्राणशब्देन निर्दिष्टः प्रत्यगात्मा, न मारुतः ॥ १२ ॥
प्राणो माता पिता प्राण इत्यादिश्रुतिवाक्यतः ॥

चेतनः प्रत्यगात्मा स्यान्न वायुरिति निर्णयात् ॥ १३ ॥
आत्मन्येवारनाभिदृष्टान्तस्योपपत्तितः ॥
अस्यैवानुगुणतया वाक्यशेषस्य सन्नयात् ॥ १४ ॥
इति प्राप्ते भूमगुणविशिष्टः परमेश्वरः ॥
नात्मा, कुतः, ? सम्प्रसादादधिकस्योपदेशतः ॥ १५ ॥
नामादिप्राणपर्यन्तं पूर्वाधिकतयोत्तरम् ॥
अभिधानात् ततः प्राणादधिकं सत्यशब्दतः ॥ १६ ॥
उपदिष्टं परं ब्रह्म भूमात्मगुणवत्तरम् ॥
आनन्दमयसूत्रे यत् सुखरूपत्वमीश्वरे ॥ १७ ॥
निरूपितमतः प्राणनिर्दिष्टात् प्रत्यगात्मनः ॥
भिन्नं ह्यन्यं सुखं ब्रह्म भूमेत्येवोपदिश्यते ॥ १८ ॥
स्वाभाविकाऽमृतत्वं चानन्याधारत्वमित्यपि ॥
सर्वात्मत्वं च ये धर्मा भूम्नस्ते परमात्मनि ॥ १९ ॥
युज्यन्तेऽतः परं ब्रह्म भूमेत्येव विनिर्णयः ॥
अन्तर्यामिब्राह्मणोक्त्या प्रत्यगर्थः परात्परः ॥ २० ॥
अहमर्थोऽपि तत्रैव पर्यवस्येन्न संशयः ॥
परात्मनः प्रत्यगात्मशरीरित्वधियो ह्यतः ॥ २१ ॥
प्रतिष्ठार्थमहंग्रहोपासनस्य निरूपणात् ॥
परमात्मा भूमगुणविशिष्ट इति निर्णयः ॥ २२ ॥
तदेतदक्षरं गार्गि ब्राह्मणा यद् वदन्ति हि ॥
तत्प्रधानं तु जीवो वा परमात्मेति संशये ॥ २३ ॥
युक्तं प्रधानं तत्रैवाक्षरशब्दप्रयोगतः ॥
अस्थूलत्वादिशब्दानां तत्रैवाथ समन्वयात् ॥ २४ ॥
यथा तदक्षरमिति परस्मिन्नक्षरं वचः ॥
दृश्यते नाप्रसिद्धं हि प्रमाणान्तरतस्तु तत् ॥ २५ ॥

प्रमाणान्तरं प्रथमं प्रवृत्तं श्रुतितः पुरा ॥
अतस्तयोर्द्वयोर्मध्ये प्रथमं बलवद् भवेत् ॥ २६ ॥
तस्मात् प्रमाणान्तरतोऽक्षरशब्दप्रयोगतः ॥
विकारकारणमिति प्रधानमिह चाक्षरम् ॥ २७ ॥
इति प्राप्तेऽक्षरं पूर्णमम्बरान्तस्य धारणात् ॥
अव्याकृतं त्वम्बरान्तं तदाधारोपदेशतः ॥ २८ ॥
त्रैलोक्यविकृताधारं परं ब्रह्माऽक्षरं भवेत् ॥
आकाशशब्दनिर्दिष्टं भूतसूक्ष्मं यदोच्यते ॥ २९ ॥
तदाधारं प्रधानं वै तदा भवितुमर्हति ॥
अक्षरार्थविवक्षायामक्षरं जीववाचकम् ॥ ३० ॥
तद्भूतसूक्ष्मपर्यन्तकृत्स्नस्याचेतनस्य च ॥
आधारत्वेन जीवात्मन्यक्षरस्य प्रयोगतः ॥ ३१ ॥
इत्याक्षेपे समाधानं हरिरात्माऽक्षरो वरः ॥
सा चाम्बरान्तविधृतिरक्षरे पुरुषोत्तमे ॥ ३२ ॥
एतस्य वाऽक्षरस्येति वाक्येन स्यात् प्रशासनात् ॥
प्रधानभावव्यावृत्तेः पुरुषान्यत्ववारणात् ॥ ३३ ॥
अक्षरान्नास्ति द्रष्टाऽन्य इति स्यादक्षरो हरिः ॥
य एतदक्षरं गार्ग्यविदित्वा प्रैति लोकतः ॥ ३४ ॥
अस्मात् स कृपण इति यज्ज्ञानाद् घोरसंसृतिः ॥
निवर्त्तते परं ब्रह्म तस्मादक्षरमुच्यते ॥ ३५ ॥
अभिध्यायीत परमं पुरुषं पुरि संस्थितम् ॥
ईक्षतेऽत्र विनिर्दिष्टः समष्टिपुरुषोऽथवा ॥ ३६ ॥
पुरुषोत्तमो वा किं युक्तमण्डाध्यक्षश्चतुर्मुखः ॥
त्रिमात्रस्योपासकस्य ब्रह्मलोकफलोक्तितः ॥ ३७ ॥
अमरत्वादिधर्माणां कथं चित् तत्र सम्भवात् ॥

इति प्राप्तेऽत्र परमः पुरुषः पुरुषोत्तमः ॥ ३८ ॥
ईक्षतिं प्रति कर्मत्वं तस्यैव व्यपदिश्यते ॥
अजराऽमरशान्तेति स एव परिपठ्यते ॥ ३९ ॥
चतुर्मुखस्य लोकोऽपि क्षयिष्णुर्धाम तस्य न ॥
अजरेक्षितृलोको यन्नजरो नमरो भवेत् ॥ ४० ॥
इदं ब्रह्मपुरे तस्मिन् दहरं पुण्डरीककम् ॥
वेश्माऽस्मिन्नन्तराकाशो दहरस्तस्य चान्तरे ॥ ४१ ॥
यदस्ति तद्धि विज्ञेयमन्वेष्टव्यं तदेव च ॥
हृत्पद्ममध्यवर्त्ती ह दहराकाशनामकम् ॥ ४२ ॥
महाभूतमुत प्रत्यगात्मा किं वा परेश्वरः ॥
इत्थं हि संशये युक्तो भूताकाशः प्रसिद्धितः ॥ ४३ ॥
अन्वेष्टव्यान्तराधारतयैतस्य प्रतीतितः ॥
इति प्राप्ते हिं दहरं गगनं पर ईश्वरः ॥ ४४ ॥
उत्तरेभ्यस्तु वाक्येभ्यस्तथाच परिपठ्यते ॥
आत्माऽपहतपाप्माऽयं विजरो मृत्युवर्ज्जितः ॥ ४५ ॥
अपिपासः सत्यकामः सत्यसङ्कल्पशोकहा ॥
इत्थं वै श्रूयमाणा ये तत्रात्मत्वादयो गुणाः ४६ ॥
स्वाश्रयं दहराकाशं बोधयन्ति परेश्वरम् ॥
तदन्वेष्टव्यमित्यत्र श्रुतिगं तत्पदं तु यत् ॥ ४७ ॥
तदुपस्थापकं पूर्वप्राप्तस्य तद्द्वयस्य वै ॥
दहरस्य तदन्तःस्थगुणजातस्य चापि हि ॥ ४८ ॥
अतो गुणविशिष्टस्य जिज्ञासाबोधकं हरेः ॥
संकल्पात् कामसम्प्राप्तिर्दहराऽऽकाशवेदिनः ॥ ४९ ॥
साऽपि तं दहराकाशं ब्रह्मेशं बोधयत्यलम् ॥
भूताकाशेनोपमानं परस्मिन् घटते यतः ॥ ५० ॥

उपासकशरीरं तु ब्रह्मणः पुरमीरितम् ॥
तत्राल्पहृत्पुण्डरीकं ब्रह्मणो वेश्म तत्र च ॥ ५१ ॥
वात्सल्यैकसज्जलधिर्दहरः परमेश्वरः ॥
तत्रान्तवर्त्त्यसंख्येयकल्याणगुणमण्डलम् ॥ ५२ ॥
अन्वेष्टव्यमिति प्रोक्तं तद्गुणो दहरो हरिः ॥
हृत्पद्मे समुपास्योऽयं वाक्येनेत्थं विधीयते ॥ ५३ ॥
दहराकाशनिर्दिष्टः सर्वाधारः परेश्वरः ॥
तस्याऽऽत्मत्वं चैष आत्मेत्यनेन प्रतिपादितम् ॥ ५४ ॥
तत्रापहतपाप्मत्वाद्यन्वेष्टव्यं गुणाष्टकम् ॥
उपदिष्टमुपास्योतस्तदष्टगुण ईश्वरः ॥ ५५ ॥
गच्छन्त्येताः ब्रह्मलोकं प्रजाः सर्वा दिने दिने ॥
न तं विदन्त्यनेनात्र गमनब्रह्मलोकयोः ॥ ५६ ॥
निर्देशाद् दहराकाशः परमात्मेति निश्चयः ॥
सति सम्पद्य न विदुरित्यन्यत्रापि दर्शनात् ॥ ५७ ॥
लयकाल इव स्थानं सुप्तौ ब्रह्मणि यन्नृणाम् ॥
श्रूयमाणं हि पर्याप्तं लिङ्गन्तद् ब्रह्मताश्रये ॥ ५८ ॥
तथा जगद्विधरणं दहरे श्रूयते तु यत् ॥
गमयन्त्येवं तदपि दहराश्रितब्रह्मताम् ॥ ५९ ॥
तथैवाकाशशब्दस्य ब्रह्मण्येव प्रसिद्धितः ॥
भवेद्धि दहराकाशः परात्मा नरकेसरी ॥ ६० ॥
वाक्यशेषेऽपि जीवस्य परामर्षान्न सो हरिः ॥
इति नोक्तगुणा जीवे सम्भवन्तीति सो हरिः ॥ ६१ ॥
जीवोऽपहतपाप्मादिः प्रजेशवचसो न किम् ॥
सत्यं किन्तु यदा भूयाद् विमुक्तः कर्मबन्धनात् ॥ ६२ ॥
आविर्भूतस्वरूपः सँस्तदाऽष्टगुणवान् भवेत् ॥

प्राग् वै प्रजापतेर्वाक्ये तिरोहितगुणोऽवरः ॥ ६३ ॥
पश्चादुद्भूतरूपस्य गुणाविर्भाव उच्यते ॥
मुक्तजीवात्मरूपस्य याथात्म्यज्ञानमेव हि ॥ ६४ ॥
दहरोपासना विद्या प्रयोजकतयोच्यते ॥
ब्रह्मप्रेप्सोर्हि जीवस्य स्वरूपज्ञानमिष्यते ॥ ६५ ॥
कल्याणगुण एवैषोऽनुभविष्यति तादृशम् ॥
कल्याणगुणमात्मानं परमानन्दमीश्वरम् ॥ ६६ ॥
तस्मात् स्वरूपविज्ञानं दहरोपासनाफलम् ॥
इत्थं प्रजापतेर्वाक्ये तद्गुणो जीव उच्यते ॥ ६७ ॥
अतिरोहितरूपः सन् प्रकाशगुणवान् सदा ॥
वर्णितः परमात्मेत्थं वाक्ये दहरसंज्ञके ॥ ६८ ॥
आविर्भूतस्वरूपस्य जीवस्याप्यशरीरिणः ॥
जगद्विधरणत्वादिगुणानैव भवन्ति हि ॥ ६९ ॥
सत्यकामत्वप्रभृतिगुणा एव हि केवलम् ॥
इत्थमग्रे फलाध्याये स्वयमेव वदिष्यति ॥ ७० ॥
अल्पत्वश्रवणं यत्तु निचाय्यत्वात्तु तद् भवेत् ॥
अत्रोक्तो दहराकाशो नृहरिर्गुणसागरः ॥ ७१ ॥
जीवस्तथा भवत्येव रूपसम्पत्त्यनन्तरम् ॥
साम्यं तयोः श्रूयते च परात्मप्रत्यगात्मनोः ॥ ७२ ॥
मुक्तौ संसारिणां तेषां तत्साम्यापत्तिलक्षणम् ॥
इदं ज्ञानमुपाश्रित्येत्यादिवाक्ये हि स्मर्यते ॥ ७३ ॥
अङ्गुष्ठमात्रः पुरुषो जनानां हृदये सदा ॥
सन्निविष्टः कठश्रुत्यामित्येवं श्रूयतेऽत्र किम् ॥ ७४ ॥
अङ्गुष्ठमात्रः प्रमितः प्रत्यगात्माऽथवा परः ॥
युक्तं तु प्रत्यगात्मैव तत्त्वस्यान्यत्र संश्रुतेः ॥ ७५ ॥

प्राणा धियः सञ्चरन्ति सर्वे चैते स्वकर्मभिः ॥
अङ्गुष्ठमात्र आत्माऽयं रवितुल्यः प्रकाशभाक् ॥ ७६ ॥
उपासार्थतयाऽप्येवं परेशे न श्रुतं क्वचित् ॥
नचाङ्गुष्ठमितस्याणोः कथमीशानता घटेत् ॥ ७७ ॥
शरीरेन्द्रियसम्भोग्यभोगोपकरणात्मनाम् ॥
अपेक्षयापि जीवस्य घटेतेशानता यतः ॥ ७८ ॥
इति प्राप्तेऽङ्गुष्ठमात्रो हृदये स्यात् परात्परः ॥
अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ॥ ७९ ॥
ईशानो भूतभव्यस्य न ततो विजिगुप्सते ॥
इत्थं चैव श्रूयमाणाच्छब्दादेव नचात्मनि ॥ ८० ॥
सर्वेशितृत्वमस्मिन् स्यात् कर्माधीने शरीरिणि ॥
सर्वेशानस्य महतः कथमङ्गुष्ठमात्रता ॥ ८१ ॥
इत्याशङ्क्य प्रवृत्तेस्तु मनुष्यमधिकृत्य यत् ॥
शास्त्रस्येति मनुष्याणां हृदयापेक्षयाऽवदत् ॥ ८२ ॥
अङ्गुष्ठमात्रपुरुष इत्यङ्गुष्ठमिते हृदि ॥
ईशस्य विद्यमानत्वादुपासार्थं तदुच्यते ॥ ८३ ॥
ब्रह्मणोऽङ्गुष्ठमात्रत्वममितत्वोपपत्तये ॥
उक्तोपासनशास्त्रे हि मनुष्यस्याधिकारिता ॥ ८४ ॥
तत्प्रसङ्गेन विद्यायां देवादीनां हि साम्प्रतम् ॥
अधिकारोऽस्ति नास्तीति विचारः सम्प्रवर्तते ॥ ८५ ॥
युक्तं न तावदस्त्येव सामर्थ्याभावतः परम् ॥
न हि देहविहीनानां देवादीनां प्रवर्त्तते ॥ ८६ ॥
ब्रह्मोपासनसामर्थ्यं साधनानामसम्भवात् ॥
न हि देहविहीनेन किञ्चित् कर्त्तुं हि पार्यते ॥ ८७ ॥
देवादीनां शरीरित्वे प्रमाणं नोपलभ्यते ॥

ये तु कर्मविधौ शेषभूता मन्त्रार्थवादकाः ॥ ८८ ॥
देवादिविग्रहं नैव प्रतिपादयितुं क्षमाः ॥
इति प्राप्ते हि देवादेरधिकारोऽस्त्युपासने ॥ ८९ ॥
सामर्थ्यार्थित्वयोः सत्त्वन्मन्यते बादरायणः ॥
आध्यात्मिकादिदुःखाभितापादर्थित्वमिष्यते ॥ ९० ॥
निरस्तहेयासंख्येयकल्याणगुणसागरे ॥
भोग्यत्वादिपरिज्ञानात् सामर्थ्यस्यापि सम्भवः ॥ ९१ ॥
यद् देवतिर्यङ्मानुष्यस्थावरादिचतुर्विधा ॥
सृष्टिराम्नायते तत्तत्कर्मानुगुणतस्तथा ॥ ९२ ॥
लोकस्थितिर्भोगयोग्यशरीरेन्द्रियसम्भवः ॥
देवादीनामतो ब्रह्मोपासनाधिकृतिः किल ॥ ९३ ॥
इन्द्रो वै सर्वदेवानामसुराणां विरोचनः ॥
प्रजापतेः सकाशं तावागच्छन्तौ कृताञ्जली ॥ ९४ ॥
द्वात्रिंशद्वर्षपर्यन्तं ब्रह्मचर्यं समूषतुः ॥
विस्पष्टमितिवाक्येन देवादीनां प्रतीयते ॥ ९५ ॥
शरीरेन्द्रियवत्त्वं च विधिशेषार्थवादके ॥
अविरोधाच्छ्रूयते हि वज्रहस्तः पुरन्दरः ॥ ९६ ॥
एवं सविग्रहा देवा ब्रह्मविद्याधिकारिणः ॥
परिच्छिन्नशरीरित्वे देवादीनां तु कर्मसु ॥ ९७ ॥
यौगपद्यागमाभावाद् विरोधः कर्मणीति चेत् ॥
अनेकदेहसम्पत्तिसामर्थ्यान्न स दृश्यते ॥ ९८ ॥
सौभरिप्रभृतीनां हि दृश्यते शक्तिमत्तया ॥
अनेकदेहसम्पत्तिर्भोगार्थमिह कर्मणे ॥ ९९ ॥
शरीरेन्द्रियवत्त्वेन जन्मनाशप्रसङ्गतः ॥
इन्द्रादीनामनित्यत्वे वेदानित्यत्वमापतेत् ॥ १०० ॥

किञ्चैवं जन्मनः पूर्वं नाशादूर्ध्वं च सम्भवेत् ॥
निरर्थकत्वं वेदस्य विरुद्धमितिचेन्न हि ॥ १०१ ॥
वैदिकेन्द्रादिशब्देभ्य इन्द्राद्यर्थस्य सम्भवात् ॥
इन्द्रादिशब्दाश्चैत्रादिशब्दवन्नैव वैदिकाः ॥ १०२ ॥
स्वव्यक्तिमात्रसङ्केतपूर्वकाः प्रसरन्ति हि ॥
किन्त्वाकृतिविशेषाणां वाचकास्तु गवादिवत् ॥ १०३ ॥
एकेन्द्रव्यक्तिसन्नाशे वैदिकान्मनसिस्थितात् ॥
इन्द्रशब्दाद् वाच्यभूतं विज्ञायेत्थं प्रजापतिः ॥ १०४ ॥
तदाकारान्यमेवेन्द्रं सृजतीह कुलालवत् ॥
यथा कुलालो मनसि घटशब्दाद्धि संस्थितात् ॥ १०५ ॥
तदाकृतिविशेषान्यं घटं सृजति तत्तथा ॥
व्याकरोन्नामरूपाणि वेदेनेतिश्रुतेर्बलात् ॥ १०६ ॥
वेदशब्देभ्य एवादाविति स्मृत्या च निर्णयात् ॥
स्मृतिपूर्वा हि देवानां सृष्टिस्तत्स्मरणं पुनः ॥ १०७ ॥
वेदशब्देभ्य एवातो वेदे नित्यत्वमस्त्यलम् ॥
नैमित्तिकादिप्रलये कल्पनेत्थं तु युज्यते ॥ १०८ ॥
प्राग्भवेन्द्रादिसंस्मृत्या देवा धात्रा हि सृज्यताम् ॥
प्राकृतप्रलये स्रष्टुर्नाशाच्छब्दस्य नाशतः ॥ १०९ ॥
भूतादिपरिणामस्य नाशात् सृष्टिः कथं भवेत् ॥
विनष्टस्य तु वेदस्य नित्यत्वमपि दुर्लभम् ॥ ११० ॥
अतो वेदादिनित्यत्वं प्रवाहानादिताश्रयात् ॥
इति चेन्न विरोधोऽत्र कथञ्चिदपि सम्भवेत् ॥ १११ ॥
समाननामरूपं तज्जगत् सृजति वै हरिः ॥
बहु स्यामिति सङ्कल्प्य पूर्वावस्थं जगत् स्मरन् ॥ ११२ ॥
शक्तिमात्रावशेषं यत्प्रलीनमभवत् पुरा ॥

समाननामरूपं तद् वेदादिजगदसृजत् ॥ ११३ ॥
हिरण्यगर्भपर्यन्तब्रह्माण्डं महदादिकम् ॥
पूर्वं सृष्ट्वा तथा वेदान् यथावस्थानुपूर्वकान् ॥ ११४ ॥
आविर्भाव्योपदिश्यैवं ब्रह्मणे पूर्ववत् तथा ॥
देवसर्गे तं नियुज्य तत्तदात्मतया स्वयम् ॥ ११५ ॥
अवतस्थे ह्यतः सर्वमुपपन्नं भविष्यति ॥
पूर्वानुपूर्वीसदृशं वेदस्योच्चारणं तु यत् ॥ ११६ ॥
तदेवापौरुषेयत्वं क्रमसंस्कारसंस्मृतेः ॥
वस्वादित्योपासनायामधिकारोऽस्ति वा नवा ॥ ११७ ॥
वस्वादित्यादिदेवानां तत्र नास्तीति युज्यते ॥
उपासकातिरेकेण वस्वादीनामसम्भवात् ॥ ११८ ॥
असावित्यादिवाक्येन वस्वादित्वमिष्यते ॥
प्राप्यं तस्मान्नाधिकारो देवानां देवसेवने ॥ ११९ ॥
तं देवा इति वाक्येन परब्रह्मात्मनीश्वरे ॥
देवमानवसेव्यत्वं श्रूयते नेतरत्र तत् ॥ १२० ॥
इति प्राप्तेऽधिकारं तु मनुते बादरायणः ॥
वस्वादित्योपासनायां वस्वादित्वासुरद्विषाम् ॥ १२१ ॥
वस्वादित्यत्वसम्प्राप्तिपूर्वकं यत इष्यते ॥
ब्रह्मप्रेप्सा ततोऽस्त्येव तेषां तद्देवताश्रयः ॥ १२२ ॥
ब्रह्मणः प्राप्तिपर्यन्तं वस्वादिफलसंश्रुतेः ॥
वस्वादिभोग्यभूता ये आदित्यांशाः प्रकीर्त्तिताः ॥ १२३ ॥
तेषामुपासनं यत्तु तदवस्थपरात्मनः ॥
कार्यकारणसद्वस्थब्रह्मोपासनवान् सुरः ॥ १२४ ॥
सम्प्राप्य वस्वादित्वं तत्कल्पे ब्रह्म गच्छति ॥
ब्रह्माप्त्यवधिपर्यन्तं वस्वादिफलसंश्रुतेः ॥ १२५ ॥

शूद्रस्याप्यधिकारोस्ति न वेसत्र विचार्यते ॥
किं युक्तमधिकारोऽस्ति शूद्रस्य ब्रह्मसेवने ॥ १२६ ॥
अर्थित्ववत्त्वाच्छूद्रस्य तत्प्रयुक्ताधिकारिता ॥
अनग्निविषयत्वाच्च नाधिकारोऽस्ति कर्मसु ॥ १२७ ॥
अग्निसाध्येषु शूद्रस्य यद्यप्यत्रास्ति तथापि ॥
ब्रह्मोपासनमात्रे हि स्वस्ववर्णाश्रमोचिताः ॥ १२८ ॥
क्रिया एव त्वपेक्षन्ते शुश्रूषासन्तिताः क्रियाः ॥
शूद्रेसामन्त्र्य रैक्वस्तु ब्रह्मविद्यां वदत्यमुम् ॥ १२९ ॥
अतोऽस्य ब्रह्मविद्यायामधिकारः प्रवर्ण्यन्ते ॥
इति प्राप्ते नाधिकारः सामर्थ्याभावतो ह्यलम् ॥ १३० ॥
असमर्थस्य चार्थित्वसम्भवेऽपि न युज्यते ॥
अधिकारस्तु शूद्रस्य वेदाध्ययनहानितः ॥ १३१ ॥
पुराणश्रवणानुज्ञापापनाशार्थमिष्यते ॥
शूद्रस्य ब्रह्मोपासार्थं न तु सेति विनिर्णयः ॥ १३२ ॥
यत्तु संवर्गविद्यायां शुश्रूषाद्याः क्रियाः पुनः॥
अधिकारं सूचयन्ति शूद्रस्येति भवेन्न हि ॥ १३३ ॥
ब्रह्मज्ञाने हि वैकल्ये हंसोक्त्यानादरश्रुतेः ॥
जानश्रुतेस्तु सञ्जाता शुगस्येति तया शुचा ॥ १३४ ॥
रैक्वब्रह्मविदः पार्श्वे प्रसाद्रवणहेतुना ॥
तेन शूद्रेति सम्बोध्य ब्रह्मविद्योपदिश्यते ॥ १३५ ॥
रैक्वेनेत्येव शूद्रत्वं न तु तद्वर्णतोऽत्र हि ॥
बहुग्रामप्रदानत्वात् तथा देशाधिपत्वतः ॥ १३६ ॥
जानश्रुतेः क्षत्रियत्वाऽवगमान्नास्ति शूद्रता ॥
अस्यां संवर्गविद्यायामुत्तरत्रापि कीर्त्तनात् ॥ १३७ ॥
अभिप्रतारिनाम्नश्च क्षत्रियस्येत्यसावपि ॥

जानश्रुतिः क्षत्रियो हि साहचर्याख्यलिङ्गतः ॥ १३८ ॥
शूद्राधिकारे नो लिङ्गमेवं न्यायविरोधिनि ॥
ब्रह्मविद्योपदेशेषु संस्कारः श्रूयते पुनः ॥ १३९ ॥
अतः शूद्रो नाधिकारी शूद्रे नोपनयो यतः ॥
शूद्रस्य वेदश्रवणं वेदाध्ययनमेव च ॥ १४० ॥
पुनस्तदर्थानुष्ठानं प्रतिषिद्धमतोऽपि न ॥
अथ हाऽस्येति वाक्येन प्रतिषेधस्तु स्मर्यते ॥ १४१ ॥
निर्विशेषैकचिन्मात्रं ब्रह्मैव परमार्थतः ॥
तद्भिन्नमखिलं मिथ्या बन्धश्चापारमार्थिकः ॥ १४२ ॥
स वाक्यजन्ययाथात्म्यज्ञानमात्रान्निवर्त्तते ॥
तन्निवृत्तिः परं मोक्ष इत्यङ्गीकर्त्तॄणां मते ॥ १४३ ॥
शूद्राद्यनधिकारोऽत्र न वक्तुमपि शक्यते ॥
यस्मात् कस्मादपि तथा चिन्मात्रब्रह्मवेदनात् ॥ १४४ ॥
शूद्राणां बन्धहानिः स्यादुपनीताद्यभाविनाम् ॥
न ह्यत्र तत्त्वमस्यादिवाक्याद्याथात्म्यवेदनम् ॥ १४५ ॥
सम्पाद्यं नेतरस्माद्धि नियन्तुमिति शक्यते ॥
अस्यापुरुषतन्त्रत्वात् सामग्रीमात्रतो जनेः ॥ १४६ ॥
अनिच्छतोपि लोकस्येत्येवं तद्बाध्यदर्शनात् ॥
वेदवाक्यजयाथात्म्यज्ञानेन विनिवर्तते ॥ १४७ ॥
बन्ध इत्यपि नो वक्तुं शक्यते त्वादृशैरपि ॥
वेदवाक्याद् भवेद्यादृग् याथात्म्यज्ञानमत्र ते ॥ १४८ ॥
पौरुषेयादपि तथा नोविशेषोऽस्ति कश्चन॥
शुक्तिकारजतभ्रान्तिर्यथा पौरुषवाक्यतः ॥ १४९ ॥
निवर्त्तते तथैवास्माच्छूद्रबन्धनिवर्त्तनम् ॥
निदिध्यासनतो द्वैतवासनागमनोत्तरम् ॥ १५० ॥

तत्त्वमस्यादिवाक्योत्थं ज्ञानं बन्धनिवर्त्तकम् ॥
इति चेत् पौरुषं वाक्यं तथैवाऽस्तु निवर्त्तकम् ॥ १५१ ॥
अपशूद्राधिकरणं नातः स्वरसतो लगेत् ।
तदेवं मध्यसम्प्राप्तामधिकारकथामिमाम् ॥ १५२ ॥
समाप्याङ्गुष्ठमात्रस्य ब्रह्मेशत्वेऽधुनोच्यते ॥
हेत्वन्तरं यतः सर्वे कम्पन्तेऽङ्गुष्ठमात्रतः ॥ १५३ ॥
अतोऽङ्गुष्ठमितं ब्रह्म परेशमिति निर्णयः ।
अङ्गुष्ठमितयोर्मध्ये वाक्ययोः सर्वकारणम् ॥ १५४ ॥
ब्रह्मासाधारणं सर्वं तेजसां छादकं तथा ॥
ज्योतिः संदृश्यते तस्मादङ्गुष्ठमित एव सः ॥ १५५ ॥
आकाशो वै निर्वहिता नामरूपद्वयोरिह ॥
आकाशशब्दनिर्दिष्टो मुक्ताऽऽत्मा वा परेश्वरः ॥ १५६ ॥
किं युक्तं तत्र मुक्तात्मा ह्यश्व इत्यादिवाक्यतः ॥
प्रकृतत्वाद् विमुक्तस्य निःसङ्कोचप्रकाशतः ॥ १५७ ॥
मुक्तत्वे नामरूपादिमुक्तस्यापि शरीरिणः ॥
बद्धत्वे नामरूपादिनिर्वाहस्यापि सम्भवात् ॥ १५८ ॥
इति प्राप्ते परात्मा वा आकाशोऽर्थान्तरत्वतः ॥
न नामरूपे निर्वोढुं शक्नुयान्नामरूपवान् ॥ १५९ ॥
मुक्तोऽपि नो निर्वोहता नामरूपादिकस्य हि ॥
जगद्व्यापाररहित्यात् तद्वानाकाश ईश्वरः ॥ १६० ॥
न मुक्तः प्रकृतो ह्यत्र प्रकृतः परमेश्वरः ॥
नामरूपादिनिर्वोढा गतपाप्मा ततो हरिः ॥ १६१ ॥
नचाकाशः प्रत्यगात्मा क्वचिद् दृष्टचरो वरैः ॥
अत आकाशपदतो वर्णितः परमेश्वरः ॥ १६२ ॥
अथ स्यात् प्रत्यगात्माऽत्र ब्रह्माभेदोपदेशतः ॥

नामरूपादिनिर्वोढाऽऽकाशः स्यादित्यतो ब्रुवे ॥ २६३ ॥
प्रत्यगात्मनः परस्मात् सुषुप्त्युत्क्रान्तिकालयोः ।
व्यपदिष्टो यतो भेद अत आकाश ईश्वरः ॥ १६४ ॥
परात्मना परिष्वक्तो न बाह्यं नापि नान्तरम् ॥
जानाति सुप्तौ चोत्क्रान्तौ परात्मा प्राज्ञ उच्यते ॥ १६५ ॥
स एष सर्वाधिपतिर्वशी सर्वस्य सर्वराट् ॥
स एव भूताधिपतिर्भूतपालः स एव हि ॥ १६६ ॥
इति पत्यादिशब्देभ्य आकाशः परमेश्वरः ॥
ऐक्योक्तिस्तु परस्यैवं चेतनाचेतनात्मनः ॥ १६७ ॥
स्थूलस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मकार्यतः ॥
सर्वं सत् खल्विदं ब्रह्मेत्यादिवाक्ये निरूप्यते ॥ १६८ ॥

इति श्रीभाष्यवार्तिके प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥



मोक्षहेतुततया ब्रह्म जिज्ञास्यं विश्वकारणम् ॥
अचिद्वस्तुप्रधानाच्च बद्धमुक्तोभयाह्वयात् ॥ १ ॥
विलक्षणं दोषहीनं सर्वज्ञं सर्वशक्तिमत् ॥
समस्तकल्याणगुणं सत्यसङ्कल्पमीश्वरम् ॥ २ ॥
निरूप्य प्रतिपाद्यन्ते प्रधानादिपराणि हि ॥
कापिलागमसिद्धान्तिवर्यैरत्यादृतानि च ॥ ३ ॥
वाक्यानि तत्र यद् व्यक्तमव्यक्तपदमीरितम् ॥
तत् किं प्रधानं किमुत परब्रह्मेति संशयः ॥ ४ ॥
तत्र प्रधानमिति हि यतस्तत्प्रक्रियासु च ॥
प्रत्यभिज्ञानतो भानात् तस्यैव पुरुषात् पृथक् ॥ ५ ॥
महतः परमव्यक्तमित्येवं कारणोक्तितः ॥
इति प्राप्तेऽव्यक्तशब्दो न प्रधानप्रबोधकः ॥ ६ ॥
आत्मदेहमनोबुद्धिरथादित्वेन रूपणात् ॥
शरीररूपकन्यस्तमत्रमव्यक्तमीरितम् ॥ ७ ॥
आत्मानं रथिनं विद्धि शरीरं रथमेव च ॥
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ८ ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥
इत्यादि सोऽध्वनः परमाप्नोति परमं पदम् ॥ ९ ॥
इत्यन्तेन रथित्वेन शरीरादिनिरूपणम् ॥
तस्मादव्यक्तशब्देन शरीरमिह पठ्यते ॥ १० ॥
रथादिरूपिते देहे येषां येभ्यः प्रधानता ॥
इन्द्रियेभ्यः परा ह्यर्था इति वाक्येन सोच्यते ॥ ११ ॥
कथमव्यक्तशब्देनाऽव्यक्तो देहो निरूप्यते ॥
तत्रोच्यते भूतसूक्ष्ममवस्थान्तरतां गतम् ॥ १२ ॥
अव्याकृतमिहाव्यक्तशब्देन प्रवितन्यते ॥

अव्याकृताचेतनस्य विकारिरथवत् पुनः ॥ १३ ॥
परार्थसाधनीभूतयत्नार्हत्वान्न संशयः ॥
यद्यप्येवं भूतसूक्ष्ममव्याकृतमिहोच्यते ॥ १४ ॥
तर्हि कापिलतन्त्रेण सिद्धं न किमिहोच्यते ॥
तत्राह कारणीभूतपुरुषाधीनताश्रितः ॥ १५ ॥
प्रयोजनं प्रकृत्यादि स्वं स्वे संसाधयत्यलम् ॥
यतः सर्वं प्रकृत्यादिशरीरं परमात्मनः ॥ १६ ॥
अन्यथा स्युः प्रकृत्यादेः स्वरूपं न प्रवृत्तयः ॥
तत एव हि तत्सिद्धप्रकृत्याखण्डनं कृतम् ॥ १७ ॥
अत एव श्रुतिस्मृत्योर्जगज्जन्मलयोक्तिषु ॥
प्रकृतिर्विकृतिर्जीवाः सङ्कीर्त्यन्ते परात्मकाः ॥ १८ ॥
तन्त्रसिद्धमिहाव्यक्तं भवेद् यदि विवक्षितम् ॥
प्रवदेत् तर्हि ज्ञेयत्वमतो नास्येह संग्रहः ॥ १९ ॥
अशब्दमिति वाक्येन ज्ञेयत्वं वदति श्रुतिः ॥
इति चेन्न यतः प्राज्ञो निचाय्यत्वेन पठ्यते ॥ २० ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥
सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ॥ २१ ॥
एषु सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ॥
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ २२ ॥
इति प्राज्ञेश्वरस्यात्र प्रकृतत्वान्न संशयः ॥
अत एवात्र पुरुषात् पञ्चविंशकसंज्ञकात् ॥ २३ ॥
न परं किञ्चिदिति च भिन्नतत्त्वनिराकृतिः ॥
अशब्दत्वादयो धर्मास्तस्यैव परमात्मनः ॥ २४ ॥
यत्तदग्राह्यमित्यादिश्रुतिभिः परिकीर्तिताः ॥
महतः परमित्यादि बुद्धेरात्मा महान् परः ॥ २५ ॥

इति प्राक् प्रकृताज्जीवात् परत्वं परिपठ्यते ॥
उपन्यासस्त्रयाणां वै ज्ञेयत्वेन यतः कृतः ॥ २६ ॥
उपायोपेयोपेतॄणामतोऽव्यक्तं न कापिलम् ॥
यथाऽऽत्मशब्दसमभिव्याहृतान्महतो गिरा ॥ २७ ॥
महत्तत्त्वं न च तथाऽव्यक्तमप्यात्मनः परम् ॥
कापिलं नात्मनो यस्मात् परत्वेनाभिधानतः ॥ २८ ॥
अजामित्यादिमन्त्रे या प्रकृतिः श्रूयते किल ॥
स्वतन्त्रा तन्त्रसिद्धा साऽथवा ब्रह्मात्मिका भवेत् ॥ २९ ॥
युक्तं तु केवला यस्मादजेत्येकत्वसंश्रुतिः ॥
स्वसरूपानन्तविश्वस्रष्टृत्वश्रवणं तथा ॥ ३० ॥
इति प्राप्ते चमसवदविशेषादिहोच्यते ॥
न जायत इत्यजात्वप्रोक्तिमात्रान्न दृश्यते ॥ ३१ ॥
केवलायास्तथा ब्रह्मात्मिकाया ग्रहणेऽपि च ॥
विशेषः प्रकृतेर्यद्वच्चमसो भक्षसाधने ॥ ३२ ॥
प्रसिद्धो न विशेषार्थो विशेषो वाक्यशेषतः ॥
यौगिकानां हि शब्दानामर्थप्रकरणादिभिः ॥ ३३ ॥
विना नार्थविशेषे हि निर्णयो भवति ध्रुवम् ॥
अजा तथाऽत्र निर्णेया ह्यर्थप्रकरणादिभिः ॥ ३४ ॥
नचात्र तन्त्रसिद्धाऽजाग्रहे प्रकरणादयः ॥
दृश्यन्तेऽस्यां न स्वातन्त्र्यात् स्रष्टृत्वं जडभावतः ॥ ३५ ॥
अजा ह्यनेन मन्त्रेण परब्रह्मात्मिकोच्यते ॥
ब्रह्मात्मिकाऽजाग्रहणे हेतुरस्तीत्युवाच ह ॥ ३६ ॥
ब्रह्मकारणिकाऽजेयं सैषाऽजा ज्योतिरित्यतः ॥
उपक्रमात् तथा ह्येके शाखिनोऽपि पठन्ति ताम् ॥ ३७ ॥
अणोरित्यादिवाक्येनोपास्यत्वेन गुहाहितम् ॥

ब्रह्माभिधाय तस्माच्च सप्तप्राणजनिस्तुताः ॥ ३८ ॥
ततस्तु सर्वलोकानां ब्रह्मादीनां प्रसम्भवम् ॥
अभिधाय विश्वजनिका साऽजोत्पन्नाऽभिधीयते ॥ ३९ ॥
ते ध्यानयोगादपश्यन्नित्यादिश्रुतिवाक्यतः ॥
ब्रह्मशक्तिस्वरूपाया अजायाः सम्प्रतीतितः ॥ ४० ॥
न स्वतन्त्रप्रकृत्यादिप्रतिपत्तिः कथचन ॥
कथमस्या अजात्वं वा ज्योतिष्ट्वं समुपक्रमात् ॥ ४१ ॥
इतिचेद् विश्वसृष्टीनामुपदेशाद् द्वयं भवेत् ॥
तथाहि सूक्ष्माऽवस्थातः कारणादीश्वरो जगत् ॥ ४२ ॥
सृजतीति कल्पनातः कार्यकारणरूपतः ॥
अवस्थाद्वयस्यान्वयः प्रकृतेरवगम्यते ॥ ४३ ॥
सा हि प्रलयवेलायां ब्रह्मतापन्नरूपिणी ॥
अविभक्तनामरूपा ह्यव्यक्तादिगिरेरिता ॥ ४४ ॥
सृष्टिकाले समुद्भूतसत्त्वादिगुणभागिनी ॥
विभक्तनामरूपा साऽव्यक्तादिपदबोधिता ॥ ४५ ॥
तेजोऽबन्नस्वरूपेण परां परिणतिं गता ॥
रक्तशुक्लशिताकारा प्रकृतिः परिपठ्यते ॥ ४६ ॥
अतोऽजा कारणावस्था कार्यावस्था च सा भवेत् ॥
ज्योतिरुपक्रमेत्येवं मध्वादिवददुष्टता ॥ ४७ ॥
सूर्यस्य कारणावस्थावस्थितस्यैकरूपिणः ॥
कार्यावस्थावस्थितस्य त्रयीनिष्पाद्यकर्मणा ॥ ४८ ॥
वस्वादिभोग्यसञ्जातरसाश्रयतया यथा ॥
मधुत्वकल्पनमथोदयास्तमयकल्पनम् ॥ ४९ ॥
न विरुद्धं तथाऽनेन मन्त्रेणाजा परात्मिका ॥
अभिधीयते तन्त्रसिद्धा स्वतन्त्रा नाभिधीयते ॥ ५० ॥

अजाशब्देन छागत्वमजायाः परिकल्प्यते ॥
तदप्यसङ्गतं विद्याग्निष्प्रयोजनभावतः ॥ ५१ ॥
पञ्चपञ्चजना यस्मिन्नाकाशश्च प्रतिष्ठितः ॥
तमेवमन्य आत्मानं विद्वान् ब्रह्माऽमृतं भवेत् ॥ ५२ ॥
कापिलागमसंसिद्धतत्त्वस्य प्रतिपादकः ॥
किमयं मन्त्र उत न ? युक्तं तत्तत्त्वबोधनम् ॥ ५३ ॥
यत् पञ्चजनसंशब्दात् पञ्चशब्दविशेषितात् ॥
पञ्चविंशतितत्त्वानां प्रत्ययादेव हेतुतः ॥ ५४ ॥
इति प्राप्ते तन्त्रसिद्धतत्त्वसम्प्रत्ययो न हि ॥
एषां पञ्चजनानां यत् पञ्चसंख्यावतामिह ॥ ५५ ॥
तन्त्र संसिद्धतत्त्वेभ्यः पृथग्भावान्न तद्ग्रहः ॥
यस्मिन् पञ्चेति यच्छब्दनिर्दिष्टपरमात्मनि ॥ ५६ ॥
समाश्रयतया ज्ञेयाः परब्रह्मात्मका हि ते ॥
यतो यच्छब्दनिर्दिष्टपरब्रह्मेति गम्यते ॥ ५७ ॥
अतस्तेभ्यः पृथग्भूता उक्ताः पञ्चजना इति ॥
न तन्त्रसिद्धा यत्तेभ्यो व्यतिरेकादतः परः ॥ ५८ ॥
सर्वतत्त्वाश्रयो ह्यत्र पुरुषः सप्तविंशकः ॥
संख्योपसंग्रहाच्चापि प्रतीतिरिह जायते ॥ ५९ ॥
पञ्चविंशतितत्त्वानामित्येव परमाशयः ॥
ब्रह्माश्रयाः पञ्चपञ्चजनाः प्राणादयोऽत्र हि ॥ ६० ॥
विज्ञायन्ते वाक्यशेषात् प्राणस्येत्यादिरूपिणः ॥
पञ्चपञ्चजनाः केचिदिन्द्रियाणीति सञ्जगुः ॥ ६१ ॥
पञ्चपञ्चजना यस्मिन्नाकाशश्च प्रतिष्ठितः ॥
अत्राकाशपदोद्दिष्टमहाभूतानि यानि च ॥ ६२ ॥
इन्द्रियाणीति तत्त्वानां ब्रह्मनिष्ठत्वमीरितम् ॥

तस्मान्न तन्त्रसंसिद्धतत्त्वग्रामोऽत्र गृह्यते ॥ ६३ ॥
वेदान्तवाक्येष्वेकस्मात् सृष्टिराम्नायते न हि ॥
सदेवेति क्वचित् सा तु सत एव हि पठ्यते ॥ ६४ ॥
असद्वेत्यादिवाक्येन क्वचिद्वा असतो जनिः ॥
असतो जायत इति जगतः परिपठ्यते ॥ ६५ ॥
निश्चेतुं शक्यते नातो जगद् ब्रह्मैककारणम् ॥
तद्धेदमिति संश्रुत्याऽव्याकृतं विश्वकारणम् ॥ ६६ ॥
अव्याकृतं पुराऽव्यक्तनामरूपं सुसंस्थितम् ॥
व्याक्रियते प्रधानं तत् साम्प्रतं नामरूपतः ॥ ६७ ॥
एवं प्रधानहेतुत्वे निश्चिते हि क्षणादयः ॥
सृष्ट्युन्मुखाशयेनेह नेया अव्याकृतेऽक्षरे ॥ ६८ ॥
बृहत्त्वसर्वव्यापित्वे प्रधाने संस्थिते यतः ॥
ब्रह्मात्मशब्दावपि च ततस्तत्रैव नीयताम् ॥ ६९ ॥
अतः स्मृतिन्यायसिद्धं प्रधानं विश्वकारणम् ॥
समुच्यते वेदवाक्यैरिति प्राप्ते प्रचक्ष्महे ॥ ७० ॥
सत्यसङ्कल्पसर्वेशान्निरस्ताखिलदोषतः ॥
परब्रह्मण एव स्याज्जगतोऽखिलसञ्जनिः ॥ ७१ ॥
आकाशादिषु हेतुत्वव्यपदेशाद्यथायथम् ॥
तस्माद्वेत्यादिवाक्याच्च तत् तेज इति वाक्यतः ॥ ७२ ॥
सत्यं ज्ञानमनन्तं यद् विपश्चिद् ब्रह्मसंश्रुतम् ॥
तस्माद्वा एतस्मादिति तदेव परिगृह्यते ॥ ७३ ॥
सर्वत्र सृष्टिवाक्येषु द्रष्टव्यं निखिलं जगत् ॥
ब्रह्मैककारणं तत्रासद्वेतिश्रुतिवाक्यतः ॥ ७४ ॥
असत्कारणमुद्दिष्टं सर्वज्ञं तत् कथं भवेत् ॥
तत्रोच्यते समाकर्षादसद् वेति परश्रुतौ ॥ ७५ ॥

साक्षिणं तमुपक्रम्यासद् वेत्याद्युत्तरत्र च ॥
भीषास्मादिति वाक्येन समाकृष्य परात् परम् ॥ ७६ ॥
प्रशासितृत्वप्रभृतिगुणानामुक्तितो ह्यसत् ॥
नामरूपविभागादिराहितेशप्रवाचकम् ॥ ७७ ॥
असत्पदेनोच्यतेऽतो नामरूपाविभक्तकम् ॥
तद्धेदमिति वाक्ये वा अव्याकृतपदं पुनः ॥ ७८ ॥
अव्याकृतशरीरं तद् ब्रह्मैव पठति ध्रुवम् ॥
प्रकृतिधर्माध्यासेन हेतुः परिणतिं प्रति ॥ ७९ ॥
पुरुषः पठ्यते नैवं किन्त्वत्र पुरुषोत्तमः ॥
यस्य चैतज्जगत् कर्म तत्कार्यजगदुक्तिभिः ॥ ८० ॥
जीवमुख्यप्राणलिङ्गाज्जीवप्राणौ परो न च ॥
इति चेन्न यथा तत्र लिङ्गानि परमेश्वरे ॥ ८१ ॥
संयोज्यानि तथैवात्र यस्येत्यखिलकारणम् ॥
ब्रह्मेत्युक्तं यतो हेतोः स्वाराज्यफलसंश्रुतिः ॥ ८२ ॥
जीवसङ्कीर्तनं जीवाद्भिन्नेशस्य प्रतीतये ॥
प्रश्नोत्तराभ्यामित्येवं जैमिनिर्मन्यते परम् ॥ ८३ ॥
सुप्ताज्ज्ञानमयाद्भिन्नमेके वाजसनेयिनः ॥
तदाश्रयं परात्मानमामनन्ति न संशयः ॥ ८४ ॥
यदि कापिलसंसिद्धपुरुषाद्भिन्न ईश्वरः ॥
इति नो तर्हि द्रष्टव्य आत्मा स्यादीश्वरो हरिः ॥ ८५ ॥
परमात्मा हि जीवेभ्यो यथाकर्म प्रपूजितः ॥
तत्तत्कर्मानुरोधेन प्रियत्वं सम्प्रयच्छति ॥ ८६ ॥
एकविज्ञानभावेन सर्वविज्ञानजन्मनः ॥
लिङ्गाज्जीवात्मसंशब्दैः परमात्माभिधीयते ॥ ८७ ॥
परकार्यतया जीवः परमात्मैव नो भवेत् ॥

तर्हि परात्मविज्ञानात् तद्विज्ञानं कथं भवेत् ॥ ८८ ॥
पावकात् सुदीप्ताद्यथा विस्फुलिङ्गात् सहस्रशः ॥
सरूपाः सम्प्रभवन्ते अक्षराद्विविधाः प्रजाः ॥ ८९ ॥
तथैवेत्थमाश्मरथ्य आचार्यो मन्यते स्फुटम् ॥
कार्यजीवस्य ब्रह्मैक्यात् तद्विज्ञानाद्धि तन्मतेः ॥ ९० ॥
प्रतिज्ञाऽऽपादनं यच्च तदयुक्तं यतो जनेः ॥
न जायते इति वाक्याज्जीवानां प्रतिषेधतः ॥ ९१ ॥
प्राचीनकर्मजनितफलभोगाय सर्जनम् ॥
जगतो जीवजातानां कार्यत्वे ब्रह्मताऽस्ति हि ॥ ९२ ॥
तथाच ब्रह्मताप्राप्तिमोक्षार्थं कर्मणोऽक्रिया ॥
उत्क्रमिष्यतो जीवस्य ब्रह्मभावात् परात्मनः ॥ ९३ ॥
जीवशब्देनाभिधानमौडुलोमेरिदं मतम् ॥
उत्क्रमिष्यति जीवे हि ब्रह्मभावस्तथा न च ॥ ९४ ॥
प्रागन्ते इत्थमुक्तं यत् तदयुक्तमवस्थितेः ॥
अन्यथा ब्रह्मभावस्य विकल्पासहनं भवेत् ॥ ९५ ॥
प्रागन्ते ब्रह्मभावोऽयं भवेत् स्वाभाविकोऽथवा ॥
औपाधिकस्तत्र युक्तः पक्षः स्वाभाविको न हि ॥ ९६ ॥
ब्रह्माभिन्नस्वरूपस्य ब्रह्मत्वाशक्यवाक्यतः ॥
औपाधिकत्वं भेदस्य सर्वदा ब्रह्मणि स्थितेः ॥ ९७ ॥
उत्क्रान्तावेव ब्रह्मत्वं कथमित्थं नियम्यते ॥
तथाच स्वशरीराख्यजीवेष्वात्मतया स्थितेः ॥ ९८ ॥
परात्मवाचको जीवः काशकृत्स्नमते भवेत् ॥
एवं निरीश्वरे सांख्ये निरस्ते सेश्वरा हि ते ॥ ९९ ॥
समुत्थिता वदन्तीत्थमधिष्ठेयं विना न हि ॥
अधिष्ठातुरीश्वरस्य कारणत्वं कथञ्चन ॥ १०० ॥

अधिष्ठायैव प्रकृतिमुपादानस्वरूपिणीम् ॥
विश्वं सृजति विश्वेशो निमित्तं कुम्भकारवत् ॥ १०१ ॥
इति प्राप्ते ह्युपादानं निमित्तं परमेश्वरः ॥
एकविज्ञानतः सर्वविज्ञानस्य प्रतिज्ञया ॥ १०२ ॥
यथा सोम्येति दृष्टान्तानुपरोधेन हेतुना ॥
अनाद्यन्तव्रतीयं गौरित्यादिप्रकृतिश्रुतौ ॥ १०३ ॥
अविभक्तनामरूपं कारणावस्थमीश्वरम् ॥
ब्रह्मप्रकृतिशब्देन पठ्यतेऽन्यस्य हानितः ॥ १०४ ॥
सर्वं वेदात्मनोऽन्यत्र तं परादादिति श्रुतिः ॥
ब्रह्मातिरिक्ताभावं सा प्रतिपादयति स्फुटम् ॥ १०५ ॥
सोऽकामयतवाक्येन बहु स्यामिति वाक्यतः ॥
उपादानं निमित्तं च ब्रह्मैव परिकीर्त्यते ॥ १०६ ॥
न केवलं प्रतिज्ञाद्यैरयमर्थोऽभिधीयते ॥
किन्तु साक्षादुपादानं निमित्तं ब्रह्म चोच्यते ॥ १०७ ॥
ब्रह्मवनं ब्रह्मवृक्षो यतं आसीदिदं जगत् ॥
ब्रह्माध्यतिष्ठन् सर्वत्र धारयद् भुवनानि हि ॥ १०८ ॥
किमुपादानं कानि च साधनानीति लोकतः ॥
पृष्टे स्वेतरभिन्नस्य ब्रह्मणः सर्वयोग्यता ॥ १०९ ॥
न विरुद्धेति ब्रह्म स्यादुपादानं निमित्तिकम् ॥
स्वयमकुरुतात्मानमित्येवं कर्तृकर्मणोः ॥ ११० ॥
अभेदस्योपदेशेन यदेकं ब्रह्म तद् द्वयम् ॥
अविभक्तनामरूप आत्मा कर्त्ताऽभिधीयते ॥ १११ ॥
विभक्तनामरूपः स कार्यमित्यपि पठ्यते ॥
तस्मात् कर्तृत्वकर्मत्वे न विरोधो मनागपि ॥ ११२ ॥
निरस्ताऽखिलदोषस्य चेतनाचेतनात्मनः ॥

परिणामविकारो हि कथमित्यत्र संशृणु ॥ ११३ ॥
परिणामस्वभावो हि विशेषणगतो भवेत् ॥
न विशेष्यस्य दोषित्वमावहेन्निष्फलस्य हि ॥ ११४ ॥
सूक्ष्मचिदचिद्रूपस्य स्थूलचिदचिद्रूपता ॥
सम्पद्यते यतो देवान्न भवेत् स विकारभाक् ॥ ११५ ॥
योनिशब्दादुपादानं कर्त्तृशब्दान्निमित्तकम् ॥
ब्रह्मैवाचिन्त्यशक्तित्वान्न विरोधो मनागपि ॥ ११६ ॥
एवं सर्वत्र वेदान्ते जगत्कारणवाचकाः ॥
चेतनाचेतनवतो ब्रह्मणः प्रतिपादकाः ॥ ११७ ॥
सूक्ष्मस्य स्थूलतापत्तिं स्थूलस्य सूक्ष्मतां तथा ॥
सम्पाद्य रमते विष्णुर्वेदवेदान्तगोचरः ॥ ११८ ॥
प्रत्यक्षादिप्रमाणानां गोचरादविचेतनात् ॥
तत्संसृष्टाद्वियुक्ताच्च चेतनाद्भिन्ननिष्कलम् ॥ ११९ ॥
आनन्दरूपममलमाद्येऽध्याये निरूपितम् ॥

इति श्रीभाष्यवार्तिके प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥

—

विरुद्धवादिसम्भाव्यप्रकारविनिवृत्तये ॥
आरभ्यते गुरुं नत्वा द्वितीयाध्यायवार्त्तिकम् ॥ १ ॥
श्रुतीनां तत्परत्वं न विरोधात् कापिलस्मृतेः ॥
अतस्तत्स्मृतिसंसिद्ध एवार्थः श्रुतिबोधितः ॥ २ ॥
अन्यथाऽनवकाशः स्यात् कापिलायाः स्मृतेरिह ॥
इतिचेन्नान्यमन्वादिस्मृतीनां तत्प्रसङ्गतः ॥ ३ ॥
यदि कापिलस्मृत्युक्तसिद्धान्तस्यानुरोधतः ॥
श्रुतिवाक्यव्यवस्था स्यात् तदान्यानवकाशता ॥ ४ ॥
भारतं भगवद्गीता मन्वाद्याः स्मृतयस्तथा ॥
विरुद्धानवकाशत्वदोषेणैषां तु पीडनम् ॥ ५ ॥
यद्याप्तकपिलोक्तीनामनुरोधाच्छ्रुतीरितम् ॥
व्यवस्थाप्यं तदाऽऽसाप्तगुरूक्तीनां हि गौरवात् ॥ ६ ॥
तत्प्रणीतेन वेदार्थो व्यवस्थाप्यः कुतो न हि ॥
यद्वै किञ्चिदिति श्रुत्या सिद्धमन्वादितद्विदाम् ॥ ७॥
तत्त्वोपलब्धिर्नैवास्ति कापिलोक्तिप्रकारतः ॥
तदुक्तिर्भ्रान्तिमूलेति श्रुत्यर्थो न तया ततः ॥ ८ ॥
शक्योऽस्ति प्रच्यावयितुं तद्विदुक्तिविरोधतः ॥
कापिलोक्तिनिराकृत्या निरस्ता यौगिकस्मृतिः ॥ ९ ॥
योगे ईशाभ्युपगमान्मोक्षसाधनतोक्तितः ॥
वक्तुर्हिरण्यगर्भस्य वेदान्ताधिकृतत्वतः ॥ १० ॥
श्रुत्यर्थनिर्णयोन्याय्यो योगोक्तेरनुरोधतः ॥
इतिचेन्न प्रधानस्य जगत्कारणतोक्तितः ॥ ११ ॥
ब्रह्मविश्वं प्रतीशस्यानुपादानत्वतोक्तितः ॥
निमित्तमात्रतोक्तेश्च न योगः श्रुतिसंमतः ॥ १२ ॥
अत्र त्वाशङ्क्यते ब्रह्म जगतो नैव कारणम् ॥

विलक्षणत्वात् तदपि शब्दादप्युपदिश्यते ॥ १३ ॥
अचेतनत्वदुःखित्वादयो धर्मा अनीश्वरे ॥
विज्ञानसुखनिसत्वादय ईशे विलक्षणाः ॥ १४ ॥
कथ्यन्तेऽतः प्रधानं स्यात् कारणत्वविलक्षणम् ॥
अशुद्धदुःख्यनीशं यच्चेतनाचेतनात्मकम् ॥ १५ ॥
जगद् विलक्षणेशेन तत् कथं प्रवितन्यते ॥
ननु,—चेतनात् पुरुषात् केशा जायन्तेऽचेतनाः कथम् ॥१६॥
अचेतनाद् गोमयाच्च वृश्चिकाश्चेतना यतः ॥
कार्यकारणभावोऽतो वैलक्षण्येऽपि दृश्यते ॥ १७ ॥
चेतिं वाच्यं चेतनात् स्यादचेतनजनिः कथम् ॥
अचेतनत्वाभिमतं चेतनत्वेन पठ्यते ॥ १८ ॥
आपोऽकामयतेत्यादौ मृदोऽपि वचनान्वयात् ॥
इतिचेन्न विजातीयं कारणं कार्यमात्रके ॥ १९ ॥
पुरुषेऽचेतनांशेन केशदन्तादिकं यतः ॥
पृथिव्याद्यभिमानिन्यो देवता मृत्पदादितः ॥ २० ॥
विशेषणत्वादुच्यन्ते मृदादिर्देवतोदिता ॥
विशेष्यत्वात् तथाचापि देवताऽनुप्रवेशतः ॥ २१ ॥
अतः कार्यं कारणाद्धि जायते न विलक्षणम् ॥
ततो जगद् ब्रह्मकार्यं नेति प्राप्तेऽभिधीयते ॥ २२ ॥
जगद्विलक्षणं ब्रह्म तदुपादानमिष्यते ॥
दृष्टा जनिर्माक्षिकादेः क्रम्यादेर्भिन्नरूपिणः ॥ २३ ॥
ननूक्तं यच्चेतनांशं सजातीये हि कारणम् ॥
सत्यमुक्तं नचैतेन सर्वं सर्वसलक्षणम् ॥ २४ ॥
सर्वस्मात् सर्वमुत्पन्नमन्यथा स्यान्न संशयः ॥
ततो विलक्षणं ब्रह्म विलक्षणजगत् प्रति ॥ २५ ॥

उपादानं कारणं स्याद् यथा स्वर्णं कटादिषु ॥
वस्त्वन्तराद् वस्तुनोऽत्र व्यावृत्तिजनकस्य तु ॥ २६ ॥
अनुवृत्तिरेव सता सालक्षण्यमुरीकृतम् ॥
माक्षिकादिसमुत्पन्ने कृम्यादौ दृश्यते न तत् ॥ २७ ॥
तस्मान्नास्त्यनुपपत्तिर्ब्रह्मकार्ये जगत्यपि ॥
न मृद्घटादाविव हि माक्षिककृमिकादिषु ॥ २८ ॥
व्यावर्तकानुगः कश्चिद् वस्त्वन्तरनिरूपितः ॥
कार्यस्वरूपाज्जगतः ? कारणं ब्रह्म चेत् पृथक् ॥ २९ ॥
तयोर्द्रव्यान्तरात्वाप्त्या कार्यं ब्रह्मण्यसद्भवेत् ॥
नैतदेवं तयोः साम्यानियमप्रतिषेधतः ॥ ३० ॥
न तु द्रव्यान्तरत्वं हि कार्यस्य प्रतिपाद्यते ॥
किन्तु ब्रह्म स्वतो भिन्नविश्वाकारेण केवलम् ॥ ३१ ॥
परिणामीति सिद्धान्तः श्रुतिवाक्यस्य गौरवात् ॥
वैलक्षण्येऽपि द्रव्यैक्यं कृमिमाक्षिकयोरिह ॥ ३२ ॥
कार्यकारणयोरस्ति कुण्डलस्वर्णयोरिव ॥
द्रव्यैक्यमभ्युपेतं चेत् कार्यकारणयोस्तदा ॥ ३३ ॥
कार्यधर्मा ब्रह्मणि स्युः सुवर्णे इव कौण्डलाः ॥
विजरो विमृत्युरित्यादिश्रुतीनां पीडनं ततः ॥ ३४ ॥
अत्रोच्यते शरीरस्थयुवत्वादि नचात्मनि ॥
तथा ब्रह्मशरीरस्थं सङ्कोचादि न ब्रह्मणि ॥ ३५ ॥
प्रतीयते ह्यतः सर्वं चेतनाचेतनात्मकम् ॥
विधेयाधेयशेषत्वैः शरीरं परमात्मनः ॥ ३६ ॥
यच्चेतनस्य यद् द्रव्यं स्वार्थं सर्वात्मना भवेत् ॥
धारयितुं नियन्तुं च शक्यं तच्छेषतात्मकम् ॥ ३७ ॥
तत्तस्य चेतनस्यात्र शरीरमिति लक्षणम् ॥

क्वचित्स्व प्रतिबन्धेन नियन्तुं चेन्न शक्यते ॥ ३८ ॥
तथापि न शरीरस्य लक्षणाव्याप्तिरिष्यते ॥
अतः सर्वं परेशेन स्वार्थे सर्वात्मना भवेत् ॥ ३९ ॥
धार्यं नियम्यं तच्छेषं शरीरमशरीरिणः ॥
कर्मजन्यशरीरस्याशरीरमिति वाक्यतः ॥ ४० ॥
प्रतिषेधो नचानन्दशरीरं प्रतिषिध्यते ॥
चेतनेन वियोगाख्यविशीर्यत्वानिरूपणात् ॥ ४१ ॥
आनन्दविग्रहो गौणशरीरं तत उच्यते ॥
प्रधानहेतुवादस्य दुष्टत्वादपि नाश्रयः ॥ ४२ ॥
ब्रह्मकारणवादस्तु निर्दुष्टत्वात् समाश्रितः ॥
तथाहि निर्विकारस्य चिन्मात्रैकरसस्य हि ॥ ४३ ॥
प्रधानसन्निधानेन तद्धर्माध्यासतस्तथा ॥
जगत्प्रवृत्तिः किमुत चिन्मात्राध्यासतो बलात् ॥ ४४ ॥
जगत्प्रवृत्तिः प्रकृतेर्नोभयं स्यादसम्भवात् ॥
सन्निधानमसङ्गस्य प्रकृत्यध्यसनं तथा ॥ ४५ ॥
चिदध्यासश्च नो वक्तुं शक्यते योग्यताहृतेः ॥
सद्भावः प्रकृतेः किं वा विकारस्तद्गतोऽथवा ॥ ४६ ॥
पुरुषस्थित एवात्र विकारः कश्चिदिष्यते ॥
न तावत् पुरुषीयं स्यादनभ्युपगमादिह ॥ ४७ ॥
प्रकृतेर्न विकारोऽपि तस्याध्यासैककार्यतः ॥
सद्भावः सन्निधानं चेन्मुक्तेऽस्याध्याससम्भवः ॥ ४८ ॥
जगत्प्रवृत्तिस्तत्पक्षे अत एव न सम्भवेत् ॥
ब्रह्मकारणवादस्तु श्रुतिमूलः समाश्रितः ॥ ४९ ॥
प्रधानवादो निर्मूलो नाश्रितः शिष्टपण्डितैः ॥
शाक्यौलूक्याक्षपादीयतर्काणां कपिलादिभिः ॥ ५० ॥

अन्योन्यं व्याहतिबलादप्रतिष्ठानसम्भवात् ॥
तैरर्थनिर्णयो न स्याच्छ्रुतिवर्त्मसमुज्झितैः ॥ ५१ ॥
योगतर्कव्याहताऽतः कापिलोक्तिर्न गृह्यते ॥
अन्यतर्कोक्तिरपि चेद् गृह्यतेऽन्यस्य तर्कतः ॥ ५२ ॥
दूष्येति तर्कासंस्थानादनिर्मोक्षप्रसङ्गतः ॥
अतीन्द्रियेऽर्थे शास्त्रं स्यात् प्रमाणमत एव हि ॥ ५३ ॥
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ॥
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ ५४ ॥
इति वेदाविरुद्धेन तर्केणाऽर्थो निरूप्यते ॥
न तु स्वोत्प्रेक्षितेनैव तेनार्थस्य निरूपणम् ॥ ५५ ॥
वेदापरिगृहीतोक्तसांख्यपक्षप्रतिक्षयात् ॥
कणभक्षाक्षपात्पक्षमुख्या अन्ये परिक्षताः ॥ ५६ ॥
ज्ञानात्मार्थात्मकं चैतत् क्षणिकं चापि ये जगुः ॥
वेदापरिगृहीतास्ते तेषां तर्काप्रतिष्ठितेः ॥ ५७ ॥
ननु,—स्थूलसूक्ष्मशरीरस्य कार्यकारणरूपिणः ॥
जीवस्य ब्रह्मणश्चापि विभागः सम्भवेत् कथम् ॥ ५८ ॥
ब्रह्मणः सशरीरत्वे भोक्तृत्वमविवर्जितम् ॥
जीवस्येव शरीरित्वप्रयुक्तसुखदुःखतः ॥ ५९ ॥
नच सम्भोगसूत्रे तत्परिहारः समर्थितः ॥
तत्रोपास्यतयैतस्य हृदयायतने स्थितेः ॥ ६० ॥
तन्मात्रेण न भोगस्य प्रसङ्गो भवति स्फुटम् ॥
जीववद् ब्रह्मणस्त्वत्र शरीरित्वेन भोजनम् ॥ ६१ ॥
प्रसक्तं परिहार्यं न भवेदपि कथञ्चन ॥
इतिचेन्न विभागः स्यादीशजीवस्वभावयोः ॥ ६२ ॥
न हि जीवे शरीरित्वकृतं भोक्तृत्वमस्ति तु ॥

पुण्यपापस्वरूपं यत् कर्म तत्कृतमेव तत् ॥ ६३ ॥
निष्पाप्मनः परेशस्य स्थूलसूक्ष्मशरीरिणः ॥
कर्मसम्बन्धगन्धोऽपि नास्त्यतः कर्मतो न तत् ॥ ६४ ॥
शरीरित्वाऽविशेषेऽपि राजसेवकयोरिव ॥
निग्रहानुग्रहकृतं सुखदुःखं जनेशयोः ॥ ६५ ॥
विभागाभावमाशङ्क्य यत् तरङ्गसमुद्रयोः ॥
दृष्टान्तेन परो ब्रूते विभागं न स्वभावतः ॥ ६६ ॥
किन्त्वविद्योपाधिकं तन्न सङ्गतमिहोच्यते ॥
न जीवे ईशभावः स्यात् परिणामी न चापि सः ॥ ६७ ॥
क्षेत्रज्ञतत्कर्मणां चानादित्वप्रतिपादनात् ॥
स्वरूपतोऽपरिणामाच्छङ्का कस्यचिदत्र हि ॥ ६८ ॥
भोक्तृभोग्यविभागस्य कदाचिन्नैव जायते ॥
मृदो घटादिः स्वर्णादेः परिणामः कटादयः ॥ ६९ ॥
तेषां विभागवत् प्रोक्तो विभागो भोक्तृभोग्ययोः ।
स्वरूपरिणामेऽपि ब्रह्मणो भोक्तृभोग्यता ॥ ७० ॥
स्यादेव पुनरप्यत्रासामञ्जस्यं समापतेत् ॥
असदित्यत्र कार्यस्य जगतो ब्रह्मकारणात् ॥ ७१ ॥
अनन्यत्वमुरीकृत्य कारणत्वमुरीकृतम् ॥
तदिदानीमनन्यत्वमाक्षिप्यात्र विधीयते ॥ ७२ ॥
विभिन्नबुद्धिबोध्यत्वान्न कार्यं कारणात्मकम् ॥
न तन्तुपटबुद्धिर्वा एकाऽऽकारा निरूप्यते ॥ ७३ ॥
कारणे कार्यसत्त्वस्य स्वीकृतौ कारकादिकम् ॥
व्यर्थं स्यादिति कार्ये स्यादसदेव स्वकारणे ॥ ७४ ॥
कृत्स्नः प्रपञ्चो मिथ्या स्यात् सन्मात्रं कारणं हि सत् ॥
बन्धमोक्षव्यवस्थाऽत्र नोपपद्येतचेन्न तत् ॥ ७५ ॥

कल्पिताया व्यवस्थाया अभावादेव वस्तुतः ॥
ब्रह्मणोऽपि परिच्छेदः कार्याभिन्नत्वतो भवेत् ॥ ७६ ॥
इतिचेन्न परिच्छेदः कल्पितोऽस्ति न तत्त्वतः ॥
चिदचिद्वस्तुशरीरस्य ब्रह्मणः सकलं हि तत् ॥ ७७ ॥
प्रकारत्वेन भिन्नं स्यादिति प्राप्ते समुच्यते ॥
वाचारम्भणमित्यादि सदेवेत्यादिवाक्यतः ॥ ७८ ॥
तदैक्षतेति वाक्येन बहु स्यामिति पाठतः ॥
ऐतदात्म्यमिदं सर्वमित्यादिश्रुतितोऽपि च ॥ ७९ ॥
चेतनाचेतनं विश्वमनन्यं ब्रह्मतो भवेत् ॥
येनाश्रुतं श्रुतं च स्यादमतं मतमित्यतः ॥ ८० ॥
कृत्स्नस्य जगतो ब्रह्मकारणान्नान्यतोच्यते ॥
कार्यं द्रव्यान्तरं भाति न तु भिन्नं स्वकारणात् ॥ ८१ ॥
मृत्तिकेत्येव सत्यं तद् विकारे नैव सत्यता ॥
मृद्द्रव्येण च तेनैव पृथुबुध्नोदरादिकः ॥ ८२ ॥
संस्थानात्मा विकारो यस्तत्प्रयुक्तघटेति च ॥
दृश्यते नामधेयं च जलाहरणसिद्धये ॥ ८३ ॥
संस्थानान्तरं मृद्द्रव्यं नामधेयान्तरं च तत् ॥
भजतेऽतो घटाद्येव मृत्तिकेत्येव गृह्यताम् ॥ ८४ ॥
घटे विचार्यमाणे तु मृत्तिकेत्येव न पृथक् ॥
तथा विचारितं कार्यं न भिन्नं स्वस्य कारणात् ॥ ८५ ॥
मृदि नष्टो घट इति व्यवहाराद् घटः पृथक् ।
इति चेन्न विनाशाख्या अवस्थाः कारणस्य हि ॥ ८६ ॥
अवस्थाभेदमादाय व्यवहारः समर्थ्यते ॥
कारणावस्थमेवाचित्कार्यावस्थं हि वस्तु तत् ॥ ८७ ॥
स्थूलसूक्ष्मं ब्रह्मणः स्याच्छरीरं परमात्मनः ॥

अन्तर्यामिब्राह्मणं हि प्रमाणमुलभ्यते ॥ ८८ ॥
शरीरभूतचिदचिद्वस्तुगा अखिलाश्च ये ॥
विकारा न परेशे ते निरवद्यत्वतः श्रुतेः ॥ ८९ ॥
ऐतदात्म्यमिदं सर्वमिति सर्वस्य सादरम् ॥
प्रत्रदस्यात्मतादात्म्यं तदेव परमार्थतः ॥ ९० ॥
तत्त्वमसीति वाक्येन निश्चितं गमयत्यलम् ॥
चिदचिद्वस्तुशरीरं तत्प्रकारतया हरिम् ॥ ९१ ॥
सर्वशब्दाभिधेयं स्यात् सूक्ष्मस्थूलप्रभेदतः ॥
सूक्ष्मकारणतावस्थः स्थूलकार्यस्त्ववस्थया ॥ ९२ ॥
परिणामी परात्मायं लौकिकव्यवहारभाक् ॥
अवस्थान्तरयोगे ऽपि बुद्धिशब्दान्तरादयः ॥ ९३ ॥
एकस्यैव प्रदृश्यन्ते बालोऽयं स्थविरो यथा ॥
मृद्दारुकनकादिभ्यो द्रव्यान्तरमुद्भवात् ॥ ९४ ॥
व्यवहारभेदसंदृष्ट्या नावस्थाभेदतो भवेत् ॥
मृदादिकारणे सद्धि बुद्धिशब्दान्तरादिकम् ॥ ९५ ॥
अत्रोत्तरं कुण्डलादिकार्यवर्गेषु दृश्यते ॥
कारणं हि सुवर्णादि सुवर्णं कुण्डलं तथा ॥ ९६ ॥
प्रत्यभिज्ञेतिभिन्नं न कारणात् कार्यकुण्डलम् ॥
न हि द्रव्यान्तरे भिन्नं द्रव्यं समुपलभ्यते ॥ ९७ ॥
अन्यथा स्यात् सुवर्णेषु मृद्द्रव्यस्योपलम्भनम् ॥
कार्यस्य कारणे सत्त्वान्न कार्यं कारणात् पृथक् ॥ ९८ ॥
लोके वेदे च कार्यं हि कारणत्वेन पठ्यते ॥
लोके घटो मृत्तिकैव वेदे चेदं सदेव सत् ॥ ९९ ॥
असतो व्यपदेशाद्धि सर्वमग्रेऽसदेव तु ॥
इति चेन्नैव सर्वस्य कार्यस्यादावसत्तया ॥ १०० ॥

व्यपदेशो न स्वरूपात् किन्तु संस्थानभेदतः ॥
सत्त्वासत्त्वे द्रव्यधर्मौ सत्त्वं सन्नामरूपता ॥ १०१ ॥
सूक्ष्मावस्था तद्विरोधी धर्मोऽसत्त्वं प्रकीर्त्तितम् ॥
वाक्यशेषाद् युक्तिसत्त्वात् तथा शब्दान्तरादपि ॥ १०२ ॥
वाक्यशेष इदं नाग्रे किञ्चनासीदिति श्रुतिः ॥
युक्तिर्मृदः सत्त्वधर्मः पृथुबुध्नोदराकृतिः ॥ १०३ ॥
घटादिव्यवहारे वै हेतुः स्यात् तस्य वा परः ॥
असत्त्वधर्मस्तद्विरोधी सोऽवस्थान्तरनामकः ॥ १०४ ॥
कपालेति घटो नेति व्यवहारस्य साधनम् ॥
न कपालाद्यवस्थातो घटाभावोऽतिरिच्यते ॥ १०५ ॥
एकस्यैव हि द्रव्यस्य प्राक्पश्चात्कालभेदतः ॥
धर्मान्तरसमायोगः श्रुतिवाक्येऽवगम्यते ॥ १०६ ॥
यथा तन्तव एवैते अवस्थान्तरतां गताः ॥
पट इत्थं सदा नामरूपकार्यादिभागिनः ॥ १०७ ॥
तथा विशिष्टं ब्रह्मात्र नामरूपादिभाग् भवेत् ॥
यथा समीरणो ह्येकदेशवृत्तिविशेषतः ॥ १०८ ॥
प्राणापानसमानादिनामरूपविभागवान् ॥
तद्वद् ब्रह्माप्येकमेव चिदचिद्भिन्नसंस्थितेः ॥ १०९ ॥
नामरूपविभागि स्यात् तस्मादन्यज्जगन्न हि ॥
ब्रह्मणोऽनन्यविश्वं चेच्छ्रुतयो भेदबोधिकाः ॥ ११० ॥
त्वयैव सकलास्त्यक्ता भेदे सत्येकता कथम् ।
अत औपाधिको भेदो भेदश्रुतिविबोधितः ॥ १११ ॥
अभेदश्रुतयो मुख्याः स्वभावाद्वैतवादिनः ॥
इति चेन्न स्वतो भिन्नं जीवं विश्वस्य कारणम् ॥ ११२ ॥
उपाधिरहितं ब्रह्म जानाति किमुतो न हि ॥

न चेत् सर्वज्ञताहानिराद्ये दुःखादि जानतः ॥ ११३ ॥
हिताहितक्रियादोषप्रसक्तिर्ब्रह्मणो भवेत् ॥
यद्यज्ञानकृतो भेदस्तं श्रुतिर्वदतीति चेत् ॥ ११४ ॥
तन्न जीवाज्ञानपक्षे जीवाऽभिन्नपरात्मनः ॥
अल्पज्ञता तथा जीवे सर्वज्ञत्वं समापतेत् ॥ ११५ ॥
ब्रह्माज्ञानमते तु स्वप्रकाशे ज्ञानसाक्षिता ॥
जगत्सृष्टिश्च युक्ता न सर्वदा स्वप्रकाशतः ॥ ११६ ॥
अज्ञानेन तिरोधानं प्रकाशस्येति चेन्न तत् ॥
प्रकाशस्य स्वरूपत्वात् तन्निवृत्तिस्तिरोहितिः ॥ ११७ ॥
तथाचैवं स्वरूपस्य निवृत्तिरिति दूषणात् ॥
तस्माज्जगत्कारणत्वं ब्रह्मणो नेयतो ब्रुवे ॥ ११८ ॥
दुःखादियुक्तजीवात्तु ब्रह्मार्थान्तरमेव तत् ॥
निर्दिश्यते यतो जीवाद्भेदेन परमेश्वरम् ॥ ११९ ॥
अनश्नन्निति वाक्याच्च ज्ञाऽज्ञाविसादिवाक्यतः ॥
अश्मकाष्ठाद्यचिद्वर्गाद् विकारास्पदतो यथा ॥ १२० ॥
अभिन्नं निरवद्यं न तथा दुःख्यात्मनोऽणुनः ॥
स्थूलसूक्ष्मकावस्थचेतनाचेतनस्य हि ॥ १२१ ॥
परब्रह्मशरीरत्वात् ततो भिन्नं परं स्थितम् ॥
इदानीं तस्य सङ्कल्पमात्रेण विविधं जगत् ॥ १२२ ॥
जायतेऽतः सृष्टियोगाविरोधस्तस्यवर्ण्यते ॥
सर्वसर्जनशक्तीनां कारणानां ह्यपेक्षणात् ॥ १२३ ॥
कथं तदनपेक्षस्य जगत्कारणतोच्यते ॥
न समर्थः कुलालादिर्घटादौ कारणं विना ॥ १२४ ॥
सर्वं कर्तुं समर्थस्य कारणापेक्षणेन किम् ॥
कार्यजननशक्तीनां सर्वेषामुपसंहृतेः ॥ १२५ ॥

सापेक्षत्वं यथा क्षीरनीरादेर्दधिशीतयोः ॥
सर्वसर्जनशक्तस्य तथैव परमात्मनः ॥ १२६ ॥
सर्वस्य जनयितृत्वमुपपद्येत केवलम् ॥
नच दध्यादिभावायाऽऽतञ्चनापेक्षणं वद ॥ १२७ ॥
क्षीरादौ किन्तु शैघ्र्यार्थं विशेषरसलब्धये ॥
यथा देवादयः स्वे स्वे लोके स्वापेक्षितानि हि ॥ १२८ ॥
सृजन्ति स्वस्य सङ्कल्पात् तथाऽसौ पुरुषोत्तमः ॥
चिदचिद्विभागहीनं निर्गतावयवं पुरा ॥ १२९ ॥
आसीत् तदेवसङ्कल्पान्नाकादिविविधं भवत् ॥
कृत्स्नं ब्रह्मांशतयाद्ये नाकं वा पृथिवी भवेत् ॥ १३० ॥
अन्ये निरंशब्रह्मात्मबोधकश्रुतिकोपनम् ॥
अतो जगत्कारणं न ब्रह्म स्यादिसतो ब्रुवे ॥ १३१ ॥
नायं दोषः श्रुतिर्ब्रह्मनिर्गतांशं यतोऽवदत् ॥
ततो विचित्रसृष्टिं च न समर्थस्य दूषणम् ॥ १३२ ॥
नच बाधितमर्थं सा कुतो वक्तुं प्रभुर्भवेत् ॥
वक्तव्यं हि यतः शब्दप्रमाणविषयो हरिः ॥ १३३ ॥
विचित्रशक्तियोगेन न विरोधोऽस्ति कश्चन ॥
वस्त्वन्तरधर्मस्य वस्त्वन्तररोपणे ॥ १३४ ॥
कृते घटादिधर्माः स्युरात्मनि चेतनेऽखिलाः ॥
तस्मात् स्वभाववैचित्र्याल्लौकिकैर्न च सङ्करः ॥ १३५ ॥
यथाऽनिलजलादीनां भिन्नौष्ण्यादिस्वशक्तयः ॥
दृश्यन्ते तद्वदेवात्र विजातीये परेश्वरे ॥ १३६ ॥
अचिन्त्याः शक्तयः सन्ति न किञ्चिदवहीयते ॥
प्रमाणं वैष्णवं चात्र पुराणं परिदृश्यते ॥ १३७ ॥
निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ॥

कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥ १३८ ॥

तत्रोत्तरम्—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ॥
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ १३६ ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥
प्रधानवादपक्षेऽपि स्युर्दोषा लौकिकास्तु ये ॥ १४० ॥
यदि लोकविजातीयं प्रधानं कारणं तदा ॥
ब्रह्मेतरविजातीयं कारणं नोच्यते कथम् ॥ १४१ ॥
निरंशं ते प्रधानं हि जगदारम्भकं कथम् ॥
सत्त्वाद्यवयवास्तस्य चेत् तदेदं विविच्यताम् ॥ १४२ ॥
सत्त्वादीनां समूहः किं प्रधानमुत तद्भवम् ॥
अन्त्ये कथं कारणं स्यात् संख्याभङ्गश्च सम्भवेत् ॥ १४३ ॥
निरंशसत्त्वादिभ्योऽपि कार्यारम्भो हि ते कथम् ॥
समूहपक्षे तेषां च देशभेदानपेक्षया ॥ १४४ ॥
अन्योन्यं युज्यमानानामारम्भस्थूलवस्तुनः ॥
तस्मात् सर्वविजातीयां सर्वशक्त्याश्रितां पराम् ॥ १४५ ॥
देवतां सन्दर्शयति परा शक्तिरिति श्रुतिः ॥
सर्वशक्ति यदा ब्रह्म कारणापेक्षणं कथम् ॥ १४६ ॥
न तस्य कार्यमित्यादिकारणादिनिषेधतः ॥
सत्यं ब्रह्म तथैवास्ति समर्थं विश्वसर्जने ॥ १४७ ॥
प्रयोजनं विना सर्वसर्जनं च कथं ततः ॥
अत्रोत्तरं तस्य लीला केवलैकं प्रयोजनम् ॥ १४८ ॥
लोकवत् कारणापेक्ष्यं सर्वकार्यप्रसर्जनम् ॥
सृज्यमानप्राणिकर्मापेक्षया प्राणिसर्जनम् ॥ १४९ ॥
उच्चनीचविभागेन निर्घृणो विषमो न सः ॥

सृष्ट्यादौ यदि जीवा न सदेवेत्येव संश्रुतेः ॥ १५० ॥
तत्कर्म न च विद्येत तत्सापेक्षजनिः कथम् ॥
अत्रोत्तरमनादित्वात् कर्मणां तदपेक्षया ॥ १५१ ॥
सृष्टिप्रवाहोऽनादिर्हि धातेतिश्रुतिवाक्यतः ॥
प्रधानपरमाण्वादौ कारणत्वे विकल्पिताः ॥ १५२ ॥
धर्मास्ते कारणत्वार्थं परब्रह्मणि सन्ति हि ॥

इति श्रीभाष्यवार्तिके द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥



चिदचिद्विशिष्टब्रह्मजगज्जन्मादिकारणम् ॥
परैरुद्भावितास्तत्र दोषास्ते दूरतः कृताः ॥ १ ॥
स्वपक्षरक्षणार्थाय परपक्षा हि साम्प्रतम् ॥
निरस्यन्तेऽन्यथा वेदे श्रद्धावैकल्यमापतेत् ॥ २ ॥
परपक्षप्रतिक्षेपायायं पादः प्रवर्तते ॥
कापिलं मतमत्रादौ सम्यगेव निरस्यते ॥ ३ ॥
तत्रेक्षतेर्नाशब्दमित्याद्यखिलसूत्रतः ॥
अतत्परत्वमात्रं हि पूर्वत्र प्रतिपादितम् ॥ ४ ॥
स्वरूपतोऽत्र तत्पक्षप्रतिक्षेपः प्रदर्श्यते ॥
विकृत्या रहिता मूलप्रकृतिर्महदादयः ॥ ५ ॥
प्रकृतयो विकृतयः सप्त षोडशको गणः ॥
विकारस्तथाऽत्र पुरुषः प्रकृतिर्विकृतिर्न च ॥ ६ ॥
तमःसत्त्वरजःसाम्यरूपा प्रकृतिरुच्यते ॥
अचेतना चेतनानां भोगमोक्षप्रचारिणी ॥ ७ ॥
अविवेकाद् भोगदात्री विवेकान्मोक्षदायिनी ॥
गुणत्रयसाम्यरूपा प्रकृतिस्त्रिगुणात्मकम् ॥ ८ ॥
विश्वं प्रति कारणं स्यादत्र प्रतिविधीयते ॥
न समर्थं प्रधानं स्याद् विचित्रजगतो जनौ ॥ ९ ॥
तस्य स्वभावाभिज्ञानामनधिष्ठितरूपतः ॥
अचेतनत्वादेवं यत्तदेवं भवति ध्रुवम् ॥ १० ॥
रथप्रासादप्रभृतिकार्यसन्निर्मितिं प्रति ॥
अचेतनं चेतनेनानाधिष्ठितमिह स्वतः ॥ ११ ॥
दारुमृत्प्रभृति क्वापि कारणं नैव दृश्यते ॥
यदि तद्व्यतिरिक्तं च पक्षीकृत्य प्रयुज्यते ॥ १२ ॥
प्राज्ञानधिष्ठिताद्यापि विचित्रजगतो जनिः ॥

परिणामिनः पयसो दधिभावेन चेतनम् ॥ १३ ॥
अधिष्ठानतयापेक्ष्यं यथैव जलदोज्झितम् ॥
नियतैकरसं वारि नालिकेराम्रसंश्रयात् ॥ १४ ॥
विचित्ररसरूपेण परिणामि स्वतस्तथा ॥
विचित्रजगदाकारपरिणामिप्रधानकम् ॥ १५ ॥
इतिचेन्न यतो नीरप्रभृति क्वापि केवलम् ॥
दध्यादिभावे नो दृष्टं स्वत एव प्रवर्तते ॥ १६ ॥
भिन्नानधिष्ठितत्वेऽपि परेशाधिष्ठितं वरम् ॥
प्रधानं विश्वजनने घटे मृद्वद्धि कारणम् ॥ १७ ॥
समस्तप्राप्तकामस्य परिपूर्णस्य सर्वतः ॥
निरवद्यातिशयानन्दस्वरूपस्येश्वरस्य ह ॥ १८ ॥
विरुद्धविश्वजनने विषमत्वादिकं पतेत् ॥
नो दोषोऽस्ति हि लीलार्थे हरिर्यस्मात् प्रवर्तते ॥ १९ ॥
क्षेत्रज्ञकर्मणामेव विषमत्वादनादितः ॥
सृष्टिवैषम्यसम्पत्त्या नैव दोषो हरेरयम् ॥ २० ॥
प्राज्ञानधिष्ठितायास्तु प्रकृतेः स्यन्दनात्मिका ॥
प्रवृत्तिर्यद्यपि नास्ति तथापि स्वयमेव हि ॥ २१ ॥
जगदाकृतिरूपेण परिणामवती भवेत् ॥
यथा धेन्वादिना भुक्ततृणाद्यन्नजलादिकम् ॥ २२ ॥
क्षीराद्याकृतिभावेन परिणाम्यवलोक्यते ॥
नेदं युक्तं वृषैर्भुक्तं न तृणादि पयस्तया ॥ २३ ॥
परिणामीयतः प्राज्ञगवा सम्पद्यते पयः ॥
तथेशेनैव प्रकृतिं परिणम्याखिलं जगत् ॥ २४ ॥
प्रकाश्यते तत्र यदि प्रकृतिर्जडरूपिणी ॥
निष्क्रियः पुरुषस्तस्मात् प्रवृत्तिर्बाधिता भवेत् ॥ २५ ॥

तथापि चेतनेशस्य सन्निधानादचेतनम् ॥
प्रवर्तते प्रधानं हि पङ्ग्वन्धवदिह स्फुटम् ॥ २६ ॥
सन्निधानादयःकान्तमणेर्लोहप्रवर्त्तनम् ॥
तथेशसन्निधानेन प्रकृतिः परिणामिनी ॥ २७ ॥
प्रकृत्या पुरुषस्यैव योगात् सर्गः प्रवर्त्तते ॥
स्वतस्तु साम्यावस्थानां न्यूनाधिक्यादिहानितः ॥ २८ ॥
अङ्गाङ्गित्वाद्यनुत्पत्त्याजगत्सर्गो न युज्यते ॥
वैषम्यं नियतश्चेत् स्यान्नित्यं सर्गस्तदापतेत् ॥ २९ ॥
ईशानधिष्ठितं तस्मात् प्रधानं कारणं न हि ॥
पुरुषप्रकारभिन्नप्रकारेणानुमानतः ॥ ३० ॥
प्रधानसिद्धौ ज्ञातृत्ववियोगाद्दोषसम्भवः ॥
तत्प्रधानं नानुमेयमत एव निगद्यते ॥ ३१ ॥
निष्प्रयोजनतोऽप्येवं प्रधानं नानुमीयते ॥
चैतन्यमात्रवपुषः पुरुषस्याक्रियस्य हि ॥ ३२ ॥
प्रकृतेर्दर्शनं भोगस्तद्वियोगोऽपवर्गकः ॥
प्रयोजनं प्रधानस्य न युक्तं नानुमेयता ॥ ३३ ॥
नित्यो विकारहीनो हि पुरुषो यदि केवलः ॥
कथं प्रकृतिसांन्निध्यात् कर्तृत्वाध्यासलक्षणः ॥ ३४ ॥
संसारः स्यात् परं तस्य स्वरूपावरणं विना ॥
आवृतेर्निर्विकारत्वहानिरेव न संशयः ॥ ३५ ॥
इत्यादिप्रतिषेधाच्च प्रत्युक्तं कापिलं मतम् ॥
जन्ममृत्युव्यवस्थार्थमिच्छन्ति पुरुषं परम् ॥ ३६ ॥
सांख्यास्तु मायिनो नैव तदपीत्यसमञ्जसम् ॥
प्रधानकारणत्वस्य युक्त्याभासतया पुरा ॥ ३७ ॥
असमञ्जसमाक्षिप्य मतं काणादमर्दति ॥

तन्त्वादयो ह्यवयवाः स्वांशैः षड्भिः सुसंयुताः ॥ ३८ ॥
उत्पादयन्त्यंशिनं स्वं तथैव परमाणवः ॥
भवेयुर्द्व्यणुकादीनां जनकास्तत्त्वसम्भवि ॥ ३९ ॥
प्रदेशभेदाभावेन सहस्रपरमाणवः ॥
संयुक्ता अपि नो तेभ्यो महद्द्रव्यादिसम्भवः ॥ ४० ॥
प्रदेशभेदाभावेन जायते प्रथिमा न हि ॥
नगसर्षपयोरस्मादसिद्धेरसमञ्जसम् ॥ ४१ ॥
तथा परमाणुगतं स्वगतादृष्टकारितम् ॥
न वा ह्युभयथाऽप्येवं न सम्भवति तच्छृणु ॥ ४२ ॥
पुण्यादिजनितादृष्टं परमाणुगतं न हि ॥
यद्यङ्गीक्रियते तर्हि सर्वदोत्पत्तिसम्भवः ॥ ४३ ॥
अदृष्टस्यात्मनिष्ठस्य परमाणुस्थकर्मणि ॥
हेतुत्वासम्भवस्तत्र यद्येवं परिकल्प्यते ॥ ४४ ॥
तस्याऽऽत्मद्वारसंयोगादणौ कर्मजनिस्तदा ॥
तत्प्रवाहस्य नित्यत्वात् सर्गो नित्यं प्रसज्ज्यते ॥ ४५ ॥
शास्त्रयोनित्वसूत्रे हि नानुमानेन सिध्यति ॥
ईश इत्थं प्रबन्धेन महता विनिरूपितम् ॥ ४६ ॥
जात्यादीनां तु व्यक्त्यादौ समवायस्य स्वीकृतौ ॥
साम्यात् तत्रापि तत्प्राप्तावनवास्थितिदूषणम् ॥ ४७ ॥
समवायः स्वरूपेण चेत् तथा व्यक्तिजातिधीः ॥
अतोऽसमञ्जसं सर्वं काणादं दर्शनं मतम् ॥ ४८ ॥
समवायस्य नित्यत्वात् तत्सम्बन्धिद्वयस्य च ॥
नित्यभावादनित्यत्वं जगतस्तेऽसमञ्जसम् ॥ ४९ ॥
चतुर्णां परमाणूनां रूपाद्याश्रयतो भवेत् ॥
अनित्यभावः स्थूलत्वं सावयवत्वं घटादिवत् ॥ ५० ॥

कार्यनिष्ठगुणास्ते च स्युः कारणगुणपूर्वकाः ॥
अतो रूपादिशून्या वै पृथिव्यादय एव ये ॥ ५१ ॥
रूपाद्यसत्त्वे तत्सत्त्वे दोषः स्यात् पक्षयोर्द्वयोः ॥
शिष्टापरिग्रहात् तर्कमतं स्यादसमञ्जसम् ॥ ५२ ॥
अंशतः कापिलं वेदे गृहीतं त्वंशतोऽपि न ॥
काणादं गौतमं तस्मादसमञ्जसतां गतम् ॥ ५३ ॥
परमाणुकारणत्वं वदन्तो वादिनो गताः ॥
परमाणुं कारणं ये जगतः प्रवदन्ति हि ॥ ५४ ॥
सौगताश्च निरस्यन्ते तच्चतुर्द्धा मतानि तु ॥
तत्र केचित् पार्थिवादिवायवीयान्तमादरात् ॥ ५५ ॥
ऊरीकुर्वन्ति सङ्घातरूपान् वै भूतभौतिकान् ॥
बाह्यानाभ्यन्तरान् चित्तचैत्तरूपान् प्रतीतितः ॥ ५६ ॥
प्रत्यक्षलैङ्गिकाणून् ये बाह्यान् सर्वान् वदन्ति हि ॥
विज्ञानेनानुमेयान् हि पृथिव्यादीन् परे पुनः ॥ ५७ ॥
अर्थजन्यं तु विज्ञानं परमार्थः परं मतम् ॥
स्वाप्नार्थकल्पा बाह्यार्था असन्त इति सञ्जगुः ॥ ५८ ॥
त्रयोऽप्येते स्वीकृतं स्वक्षणिकं प्रवदन्ति हि ॥
भूतभौतिकतच्चित्तचैत्त्यभिन्नात्मखादिकम् ॥ ५९ ॥
न मन्यन्ते तथाऽन्ये तु सर्वशून्यत्ववादिनः ॥
निरस्यन्ते तत्र तावद् बाह्यार्थास्तित्ववादिनः ॥ ६० ॥
रूपरसगन्धस्पर्शस्वभावाः पार्थिवास्तथा ॥
रूपरसस्पर्शभावा जलीयाः परमाणवः ॥ ६१ ॥
रूपस्पर्शस्वभावास्तु तैजसाः परमाणवः ॥
स्पर्शवन्तो वायवीयाः सर्वसङ्घातमागताः ॥ ६२ ॥
देहेन्द्रियादिरूपास्ते विषयादिस्वरूपिणः ॥

अहङ्काराख्यविज्ञानसन्तानो देहमध्यगः ॥ ६३ ॥
स एवात्मा हितत्वेन व्यहारविभागिनः ॥
पृथिव्यादय एवात्र संहतास्तत्र दृष्यते ॥ ६४ ॥
भूम्यादिभूतसङ्घातः परमाणुनिमित्तकः ॥
यश्च देहादिसङ्घातः पृथिव्यादिनिमित्तकम् ॥ ६५ ॥
तत्रोभयत्र सङ्घातसमुत्पत्तिर्न युज्यते ॥
क्षणं स्थितानां नष्टानां सङ्घातः क्षणिकः कथम् ॥ ६६ ॥
व्याम्रियन्ते कदा तेऽत्र संहन्यन्ते कदा पुनः ॥
क्षणिकत्वान्न सम्बन्धस्तयोः कारणकार्ययोः ॥ ६७ ॥
विज्ञानात्मा स्वविषयं क्षणिकं क्षणिकः कथम् ॥
ग्रहीतुं शक्नुयात् तस्मात् सौगतं न समञ्जसम् ॥ ६८ ॥
सन्तानानामभेदेऽपि सन्तानिभ्यो हि वस्तुतः ॥
वस्त्वन्तरत्वाभावेन व्यवहारो न तत्कृतः ॥ ६९ ॥
यद्यप्यखिलभावा वै क्षणिकास्ते तथापि हि ॥
अविद्ययैवोपपन्नं व्यवहारादि केवलम् ॥ ७० ॥
क्षणिकादौ स्थिरत्वादिगोचरज्ञानरूपिणी ॥
अविद्या तया तु जायन्ते रागद्वेषादयः पुनः ॥ ७१ ॥
चित्ताभिज्वलनरूपविज्ञानं नाम जायते ॥
चित्तचैत्त्यास्ततो भूमिषडायतनमिन्द्रियम् ॥ ७२ ॥
ततः स्पर्शादयो ये वै वेदनादय एव हि ॥
एवं सर्वोऽपि जायेत व्यवहारो ह्यविद्यया ॥ ७३ ॥
नेदं युक्तमविद्यादौ सङ्घातं प्रति नो यतः ॥
निमित्तत्वमतो नैव विपरीतास्तु बुद्धयः ॥ ७४ ॥
इतश्च क्षणिकत्वाख्यपक्षे न जगदुद्भवः ॥
पूर्वक्षणस्य नष्टत्वान्नष्टोत्तरक्षणं प्रति ॥ ७५ ॥

हेतुत्वानुपपत्तेस्तु न भावोऽभावहेतुकः ॥
न पूर्वक्षणवर्त्त्येव हेतुरेवमथान्यथा ॥ ७६ ॥
घटक्षणः कश्चिदेव तदुत्तरक्षणे सताम् ॥
गवाश्वमहिषादीनां हेतुः स्यान्नैव संशयः ॥ ७७ ॥
हेतुं विना कार्यभूतिस्तर्हि सर्वत्र सर्वदा ॥
सर्वं स्यादिति हीयेत प्रतिज्ञा भवतां ननु ॥ ७८ ॥
कार्यकारणयोर्युगपदुपलब्धिः प्रसज्ज्यते ॥
क्षणिकत्वादन्यथा च क्षणिकत्वक्षतिस्तत्र ॥ ७९ ॥
इत्येवमसदुत्पत्तिर्निरस्ता साम्प्रतं पुनः ॥
निरन्वयविनाशोऽपि न स्यादित्येवमुच्यते ॥ ८० ॥
अभिघातोत्तरं भावी प्रतिक्षणं भवन् हि यः ॥
स्थूलः सदृशसन्तानः प्राकृतनान्तस्वरूपकः ॥ ८१ ॥
उपलब्धियोग्यऽयोग्यर्हो विरहः सनिरन्वयः ॥
प्रतिसंख्यापदेनाद्यो निरोधोऽथ द्वितीयकः ॥ ८२ ॥
निरोधोऽप्रतिसंख्याख्यवचसा विनिरूपितः ॥
योग्यौ न तावविच्छेदात् तथा हि शृणु सादरम् ॥ ८३ ॥
उत्पत्तिनाशौ सद्रव्ये ह्यवस्थान्तररूपिणौ ॥
अवस्थायोगि सद्द्रव्यमेकमत्रास्थिरं ततः ॥ ८४ ॥
कारणाभिन्नकार्यं स्यादिति प्राक् प्रतिपादितम् ॥
निरन्वयविनाशस्तु दृष्टो दीपे विनाशिते ॥ ८५ ॥
अन्यत्राप्यनुमीयेतेत्येवं न घटते पुनः ॥
तस्यापि सूक्ष्मतारूपा ह्यवस्थान्तरकल्पनात् ॥ ८६ ॥
तुच्छादुत्पद्यते कार्यं तुच्छमेव भविष्यति ॥
मृदः सुवर्णाच्चोत्पन्नं मार्दं सौवर्णमेव हि ॥ ८७ ॥
सतो निरन्वये नाशे तुच्छाप्तिर्जगतः क्षणात् ॥

दोषादुभयथाऽप्येवं कार्योत्पत्तिविनाशयोः ॥ ८८ ॥
भवदुक्तप्रकारेण न भवेत् सम्भवस्तयोः ॥
निरुपाख्यता न युक्तैवमाकाशे भवता यतः ॥ ८९ ॥
अङ्गीकृता पृथिव्यादिवदबाधितबुद्धितः ॥
अत्र श्येनः पतत्यत्र गृध्र इत्यनुभूतितः ॥ ९० ॥
सदेशं गगनं न स्याद् भूम्यादिविरहात्मकम् ॥
तदेवेदं सदेवायमित्येवं प्रत्यभिज्ञया ॥ ९१ ॥
स्थिरं न क्षणिकं न स्यान्न च सादृश्यतो ह्ययम् ॥
प्रत्यभिज्ञाप्रत्ययोऽयं न वक्तुं परिशक्यते ॥ ९२ ॥
घटबुद्धौ घटाकारं समर्प्य ध्वस्त एव चेत् ॥
ज्ञाननिष्ठेन नीलादिरूपाकारेण मीयते ॥ ९३ ॥
नीलज्ञानस्य सन्ताने पीतज्ञानोद्भवो न हि ॥
अतः पूर्वत्र विज्ञानाज्ज्ञानाकारो न सिध्यति ॥ ९४ ॥
ततोऽर्थकृतवैचित्र्यं ज्ञानवैचित्र्यमिष्यते ॥
नीलपीताद्याकृतिर्हि विज्ञाने दृश्यते न सा ॥ ९५ ॥
विनष्टार्थस्य युक्ता स्यादसतो दर्शनं यतः ॥
धर्मिनाशेन तद्धर्मो भिन्ने संक्रमितो भवेत् ॥ ९६ ॥
दृष्टं यत् प्रतिबिम्बादि स्थिरस्यैव भवेद्धि तत् ॥
तत्तत्क्षणिकभावानामसदुत्पत्त्यहेतुकः ॥ ९७ ॥
विनाशो मन्यते तस्मादुदासीनस्वभाविनाम् ॥
पुण्याभाववतां चात्र विशेषविरहात् किल ॥ ९८ ॥
सर्वार्थसिद्धिः स्यादिष्टप्राप्त्यनिष्टनिवृत्तितः ॥
तथैहिकामुष्मिकं च फलं मोक्षश्च सिध्यतु ॥ ९९ ॥
विज्ञानमात्रमस्तीति योगाचारा वदन्ति हि ॥
यदुक्तमर्थवैचित्र्यकृतज्ञानविचित्रता ॥ १०० ॥

इति न ज्ञानमखिलं करणैः सहितं स्वयम् ॥
विचित्रं वासनायाश्च वैचित्र्यादेव जायते ॥ १०१ ॥
प्रवाहः प्रत्ययानां यो वासना सा विलक्षणा ॥
यद् घटाकारविज्ञानं कपालाकारसंविदः ॥ १०२ ॥
तत् पूर्वघटविज्ञानं स्वपूर्वस्य च तस्य हि ॥
आपादकं भवेदेवं स्वं पूर्वस्योत्तरोत्तरम् ॥ १०३ ॥
एवंरूपः प्रत्ययानां प्रवाहो वासना भवेत् ॥
अङ्गीकुर्द्भिर्बाह्यमर्थं घटज्ञाने घटाकृतौ ॥ १०४ ॥
विना घटीयसारूप्यं वक्तुं नैव प्रपार्य्यते ॥
तेनैव व्यवहारश्चेद् वृथा स्यादर्थकल्पना ॥ १०५ ॥
अत्रोच्यतेऽर्थविरहो नार्थानामुपलब्धितः ॥
प्रतीयन्त एवमेव लौकिकाः सर्व एव हि ॥ १०६ ॥
जानाम्यहं घटमिति क्रियाकर्मस्वभावतः ॥
तद्धात्वर्थज्ञानरूपादर्थो भिन्नः स्वरूपतः ॥ १०७ ॥
सहोपलम्भनियमादभेदो नीलतद्धियोः ॥
इत्यात्मख्यातिमतिभिः साहित्यस्य निरूपणात् ॥ १०८ ॥
अङ्गीकृतोऽर्थभेदो हि सहितं वस्तु तत्र हि ॥
यथा दीपगुणत्वेऽपि प्रभाद्रव्यं त्वयेष्यते ॥ १०९ ॥
तथैवात्मगुणज्ञाने द्रव्यत्वेन विरोधिता ॥
आत्मसंयोगिनस्तस्माद् बाह्यार्थत्वघटादिवत् ॥ ११० ॥
ज्ञानस्यार्थस्य सम्बन्धात् प्रकाशोऽर्थस्य सम्भवन् ॥
बाह्यार्थत्वं साधयति निराबाधं नयोत्तमम् ॥ १११ ॥
यत् परैः स्वप्नदृष्टान्ताज्जाग्रज्ज्ञानं निराश्रयम् ॥
निरूप्यते तत्र वाच्यं वैधर्म्यान्न हि स्वप्नवत् ॥ ११२ ॥
स्वप्नज्ञानविधर्मत्वादर्थशून्यं न जागरम् ॥

ज्ञानं सम्भवितुं योग्यं ज्ञानादर्थस्ततः पृथक् ॥ ११३ ॥
निद्रादिदोषसन्दुष्टकरणैः स्फुरितानि हि ॥
स्वप्नज्ञानान्यपार्थानि तद्विरुद्धानि जागरे ॥ ११४ ॥
अर्थवत्त्वेन ज्ञानानि न तेषां स्वप्नसाम्यता ॥
सर्वेषामर्थशून्यत्वे ज्ञानानां च निरर्थता ॥ ११५ ॥
न सिध्यत्यनुमानं यद्विषयार्थस्य साधकम् ॥
निर्विषयानुमानेन विषयः प्राप्यते कथम् ॥ ११६ ॥
तदेवमर्थशून्यत्वं ज्ञानानां दुर्घटं मतम् ॥
निर्वक्तुं शक्यते नैवानिर्वाच्योऽर्थो हि यन्मते ॥ ११७ ॥
तन्मते जागरं ज्ञानं निरालम्बं कुतो न हि ॥
न केवलार्थशून्यस्य ज्ञानस्यानुपलम्भनात् ॥ ११८ ॥
भावोऽस्ति कर्मकर्तृभ्यां रहितं क्वापि नैव तत् ॥
स्वप्नज्ञानादिषु तथा नार्थशून्यत्वमिष्यते ॥ ११९ ॥
निरूपयिष्यते चेदमग्रे ख्यातिनिरूपणे ॥
पाराकाष्ठा सौगतानां शून्यवादः प्रकीर्त्तितः ॥ १२० ॥
बुद्ध्यारुढा यथैव स्युर्मन्दानां च तथात्र हि ॥
क्षणिकत्वादयो वादा दर्शिता दयया परम् ॥ १२१ ॥
शून्यमेव परं तत्त्वमभावापत्तिरेव हि ॥
मुक्तिरित्येव बुद्धस्य परमाशयशासनम् ॥ १२२ ॥
सर्वथानुपपत्तेश्च शून्यं तत्त्वं भवेन्न हि ॥
सिषाधयिषितं शून्यं प्रमाणादुपलभ्य चेत् ॥ १२३ ॥
प्रमाणसत्त्वं स्यादेव तच्छून्यं केवलं कथम् ॥
तदसत्त्वे च शून्यस्य सिद्धिस्ते कथमिष्यते ॥ १२४ ॥
सर्वं जैनमते वस्तु सत्त्वासत्त्वादिभङ्गिभिः ॥
नियतं नैव वाञ्छन्ति तन्मतप्रतिपादकाः ॥ १२५ ॥

अस्ति स्यान्न च नास्ति स्यादस्ति नास्ति च स्यादपि ॥
वक्तव्यमस्ति स्यादस्ति न वक्तव्यं तथाऽस्ति हि ॥ १२६ ॥
नास्ति स्यादथ वक्तव्यमस्ति नास्ति च तत्पुनः ॥
एवं सर्वत्र द्रष्टव्या भङ्गयः सप्त सादरम् ॥ १२७ ॥
नैतद् युक्तं विरोधेन यतो नैकत्र सम्भवः ॥
यन्नित्यं तदनित्यं न यत् सत्यं तदसत् कुतः ॥ १२८ ॥
न सम्भवत्यतो जैनमतं मत्तोक्तिवत् किल ॥
देहमानेन सदृशमान आत्माऽस्ति तन्मते ॥ १२९ ॥
हस्तिदेहमितस्यापि मशके मातृता कथम् ॥
मशकोऽल्पमितोऽप्येवं व्याप्नुयात् सर्वतो गजे ॥ १३० ॥
पापपुण्यादिवशतः सङ्कुच्य विकसत्यलम् ॥
इति चेद्देह आत्मैव भवेच्चार्वाकवत् तव ॥ १३१ ॥
यत्सङ्कोचविकासाभ्यां तदेवेदं कलेवरम् ॥
भिन्नं प्रतीयते नैव तथैवात्मा हि तन्मते ॥ १३२ ॥
अवस्थान्तरतापत्त्या विकारस्यापि सम्भवात् ॥
अनियता प्रसज्ज्येत वृथाऽतो मतवर्णनम् ॥ १३३ ॥
परिमाणं मुक्तगतं देहस्याग्रेऽपरिग्रहात् ॥
स्थिरं तत्सर्वदाप्यस्तु तेन देहमितेन किम् ॥ १३४ ॥
नादर्त्तव्यं पशुपतेर्मतमन्योन्यव्याहतेः ॥
भगासनस्थात्मचिन्तामुद्राषट्कस्य धारणम् ॥ १३५ ॥
सुराकुम्भस्थापनं च तत्स्थदेवार्चनं रहः ॥
श्मशानभस्मस्नानादि सर्वं वेदविरोधतः ॥ १३६ ॥
परिकल्प्योपासनं यज्ञाङ्गीकर्त्तव्यमास्तिकैः ॥
निमित्तकारणेशस्य कल्पनाया असम्भवात् ॥ १३७ ॥
न प्रधानाद्यधिष्ठानमीशो मृदि कुलालवत् ॥

अशरीरात्मनो भोक्तुर्यथा देहेन्द्रियादिकम् ॥ १३८ ॥
प्रत्यधिष्ठानता योग्या तथेशस्याशरीरिणः ॥
प्रकृत्यधिष्ठानता चेन्नादृष्टादिप्रसङ्गतः ॥ १३९ ॥
अदृष्टादिकृतं जीवे योग्यं, न तु महेश्वरे ॥
धर्माधर्मादृष्टवत्त्वे सृष्टिसंहारभाग् भवेत् ॥ १४० ॥
अन्तवान् सर्वथाऽल्पज्ञो जीववत् परमेश्वरः ॥
अप्रामाण्यं समाशङ्क्य पञ्चरात्रागमस्य हि ॥ १४१ ॥
वैदिकार्थाविरोधेन प्रामाण्यमधुनोच्यते ॥
आशङ्क्यैवं वासुदेवाज्जीवसङ्कर्षणोऽभवत् ॥ १४२ ॥
सङ्कर्षणान्मनो जज्ञे प्रद्युम्नपरिसंज्ञकं ॥
ततोऽनिरुद्धोऽहङ्कारो जात इत्थं विकल्प्यते ॥ १४३ ॥
विरुद्धा प्रक्रिया यस्माज्जीवोत्पत्तिं जगाद तत् ॥
न जायते म्रियते वेत्यादिवाक्यसमूहतः ॥ १४४ ॥
अनादिजीवजातीनामुत्पत्तिप्रतिषेधतः ॥
मनसः करणस्यापि कर्त्तुर्ज्जीवाज्जनिर्न हि ॥ १४५ ॥
इत्याशङ्क्य समाधानं सिद्धान्ते वदति स्फुटम् ॥
अजानता भागवतप्रक्रियामिदमुच्यते ॥ १४६ ॥
विरुद्धाभिहिता येयं जीवोत्पत्तिरिति स्फुटम् ॥
चतुरात्मा वासुदेव उपास्योऽभिहितो यतः ॥ १४७ ॥
ततो विरोधलेशोऽपि पञ्चरात्रे न विद्यते ॥
वासुदेवः परं ब्रह्म पूर्णषाड्गुण्यसद्वपुः ॥ १४८ ॥
सूक्ष्मसद्व्यूहविभवभेदभिन्नं हि सेवकैः ॥
यथाधिकारं ज्ञानेन कर्मणाऽभ्यर्च्य लभ्यते ॥ १४९ ॥
विभवार्चनात् सद्व्यूहं प्राप्य तस्यार्चनात् परम् ॥
सूक्ष्मं यद् वासुदेवाख्यं प्राप्यते इति तन्मतम् ॥ १५० ॥

विभवो हि नाम रामकृष्णादिप्रकटो गणः ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नोऽथाऽनिरुद्धकः ॥ १५१ ॥
चतुर्व्यूहो व्यूहसंज्ञः शास्त्रकृद्भिर्निरूपितः ॥
सूक्ष्मं तु वासुदेवाख्यं परं षाड्गुण्यविग्रहम् ॥ १५२ ॥
अतः सङ्कर्षणादीनां परस्यैव समीक्षया ॥
स्वेच्छाविग्रहरूपत्वादजानां बहुधा जनिः ॥ १५३ ॥
कृपानिमित्तो यः प्रोक्तः स्वेच्छाविग्रहसङ्ग्रहः ॥
तदेव जन्म सम्प्रोक्तं शास्त्रेणेति न दूषणम् ॥ १५४ ॥
तदत्र जीवाधिष्ठाता सङ्कर्षणपरेश्वरः ॥
जीवशब्दाभिधो यः स्यात् तथा प्रद्युम्नसंज्ञकः ॥ १५५ ॥
अधिष्ठाता हि मनसो मनसा व्यवह्रियते ॥
अधिष्ठाताऽनिरुद्धः स्यादहङ्कारस्य वै तथा ॥ १५६ ॥
अतोऽभिधेयोऽहङ्कारशब्देन परमेश्वरः ॥
प्रतिषिद्धाऽतो जीवस्य समुत्पत्तिरिहागमे ॥ १५७ ॥
अप्रमाणं विरुद्धांशमुक्त्वा सूत्रचतुष्टयम् ॥
समाख्यातं परैर्यत् तत् सूत्रकाराऽनभीप्सितम् ॥ १५८ ॥
व्यासो हि सूत्रकारोऽत्र गृहस्थेत्यादिवाक्यतः ॥
प्रतिपादितवान् पञ्चरात्रशास्त्रार्थसत्क्रियाम् ॥ १५९ ॥
सांख्यादिबाह्यतन्त्राणां न्यायाभासादिमूलता ॥
अतो विप्रतिषेधाच्चासामञ्जस्यमुदाहृतम् ॥ १६० ॥

इति श्रीभाष्यवार्तिके द्वितीयाऽध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

इदानीं स्वीयपक्षस्य निर्दुष्टत्वप्रसिद्धये ॥
ब्रह्मकार्यत्वसिद्ध्यर्थं चेतनाचेतनात्मके ॥ १ ॥
प्रपञ्चे कार्यतायास्तु प्रकारः परिशोध्यते ॥
तत्राकाशसमुत्पत्तिरुत नेति प्रसंशये ॥ २ ॥
युक्तं न वियदुत्पत्तिरिति कुत्राप्यसंश्रुतेः ॥
अन्यथाऽऽकाशकुसुमं समुत्पन्नं भवत्वलम् ॥ ३ ॥
न निरंशस्य सर्वत्र गतस्य गगनस्य तु ॥
सुनिरूपयितुं शक्या समुत्पत्तिर्न संशयः ॥ ४ ॥
उत्पत्त्यसम्भवादेव छान्दोग्ये सृष्टिरूपणे ॥
तेजोऽबन्नानि त्रीण्येव जन्मभाञ्जीति रूपितम् ॥ ५ ॥
आकाश आत्मनो जात इत्यादिश्रुतिरूपिता ॥
वियदुत्पत्तिरर्थस्य विरोधात् बाध्यते खलु ॥ ६ ॥
अत्रोच्यते समुत्पत्तिराकाशस्यास्ति सर्वथा ॥
श्रुतिसिद्धे विरुद्धं यन्निरंशत्वादिहेतुकम् ॥ ७ ॥
नानुमानं समर्थं स्यादात्मन्येवं प्रसङ्गतः ॥
तस्माद्वेति श्रुतौ गौणी गगनोत्पत्तिरीरिता ॥ ८ ॥
इति नैवासम्भवाद्वै शब्दाच्चेति शृणुष्व तत् ॥
छान्दोग्ये यतः पूर्वं ब्रह्मणस्तेजसो जनिः ॥ ९ ॥
अतः प्रथमतो नैव गगनोत्पत्तिरिष्यते ॥
वायुश्चाथान्तरिक्षं च श्रुतावऽमृतमुच्यते ॥ १० ॥
सम्भूतैकस्य शब्दस्य गौणत्वं गगनेक्षया ॥
अग्नीक्षया च मुख्यत्वं कथमित्यत उच्यते ॥ ११ ॥
तस्माद् वेत्यादिवाक्ये तु गगने ब्रह्मशब्दवत् ॥
गौणत्वेन प्रयुक्तं तत् सम्भूतस्य पदस्य हि ॥ १२ ॥
मुख्यत्वासम्भवाद् वायोरग्निरित्यादिसङ्गतात् ॥

यथा प्रधाने ब्रह्मगीर्गौणत्वेन प्रयुज्यते ॥ १३ ॥
तत्प्रकरणे ब्रह्मणि मुख्यत्वेनापि युज्यते ॥
तथा सम्भूतशब्दोऽपि मुख्योऽग्नौ गगने न च ॥ १४ ॥
परिहरति—
छान्दोग्यश्रुतिवाक्येन गौणो नाकाशसम्भवः ॥
यतस्तत्रैकविज्ञानात् सर्वविज्ञानमीरितम् ॥ १५ ॥
अत आकाशशब्दोऽपि ब्रह्मकार्यं तदुद्भवात् ॥
छान्दोग्ये वियदुत्पत्तिरत एव न संशयः ॥ १६ ॥
यतः, सदेव सौम्येदमग्र आसीदिति श्रुतौ ॥
एकत्वोक्तेरैतदात्म्यमिदमित्यादितश्च ह ॥ १७ ॥
कार्यत्वाद् ब्रह्मणो नैव व्यतिरेकः प्रतीयते ॥
ऐतदात्म्यमिदं सर्वमित्यादिवचनादपि ॥ १८ ॥
आकाशस्य विकारित्ववचनाद् ब्रह्मणो जनिः ॥
विभागाख्यापि युक्तोक्ता यथा लोकेऽपि दृश्यते ॥ १९ ॥
इमे सर्वे देवदत्तपुत्रा इत्यभिधाय वै ॥
तेषु केषांचिदुत्पत्तिवचनादितरेऽखिलाः ॥ २० ॥
उत्पत्तिमन्तो निर्णीतास्तथैव गगनादयः ॥
हेतुनाऽनेन वायोश्च व्याख्याता जनिरत्र हि ॥ २१ ॥
पृथग्योगस्य करणमाकाशानिलयोस्तु यत् ॥
तेजोऽत इति सूत्रे हि परामर्शार्थमस्य हि ॥ २२ ॥
ब्रह्मभिन्नाखिलस्याऽत्र नानुत्पत्तिरसम्भवात् ॥
उपलक्षणमात्रेण वायोराकाशकस्य च ॥ २३ ॥
उत्पत्तिवचनं किन्तु सर्वमुत्पद्यते सतः ॥
एकस्य ब्रह्मणो ज्ञानात् सर्वज्ञानप्रतिज्ञया ॥ २४ ॥
अबाधयाऽन्यथा चेयं प्रतिज्ञाहानिरापतेत् ॥

एकमेवेति प्राक् सृष्टेरेकतत्त्वाऽवधारणात् ॥ २५ ॥
ऐतदात्म्यमिदं सर्वमित्यादिशब्दतश्च हि ॥
ब्रह्मणोऽव्यतिरेकस्य प्रतीतेर्वियतो जनिः ॥ २६ ॥
ब्रह्मभिन्नस्य कृत्स्नस्य कार्यत्वमुपपादितम् ॥
अधुनाऽन्येन जन्यानां कार्यत्वं परिचिन्त्यते ॥ २७ ॥
केवलात् कारणाज्जन्यं तद्रूपादुत ब्रह्मणः ॥
जायते केवलाद्युक्तं वायोरग्निरितीरितात् ॥ २८ ॥
अग्नेरापस्तथैवाद्भ्यः पृथिवीजनिरुच्यते ॥
ब्रह्मणः कारणत्वस्य पारम्पर्येण सङ्गतिः ॥ २९ ॥
इति प्राप्ते सर्वकार्ये ब्रह्म कारणमिष्यते ॥
बहु स्यामिति सङ्कल्पात् तल्लिङ्गान्महदादिकम् ॥ ३० ॥
प्रतीशः कारणं किञ्च तत्तेज ऐक्षत स्वयम् ॥
बहु स्यां प्रजायेयेति ह्याप ऐक्षन्त ता अपि ॥ ३१ ॥
बह्व्यः स्याम प्रजायेमहीतीक्षापूर्विकाऽखिलैः ॥
सृज्यतेऽतो जडेष्वीक्षाबाधात् तत्तच्छरीरः ॥ ३२ ॥
ईशः कर्त्ता सृज्यमात्रेऽखिलं प्रति कलेवरी ॥
अन्तर्यामिब्राह्मणेऽपि पृथिव्याद्यखिलं प्रति ॥ ३३ ॥
शरीरिब्रह्मसंश्रुत्या कारणं तज्जगत् प्रति ॥
ब्रह्मानन्तर्यरूपोऽयमुत्पत्तिक्रमवर्णकः ॥ ३४ ॥
तदा घटेद् यदा ब्रह्म सर्वकारणमिष्यते ॥
विज्ञानसाधनत्वाच्च विज्ञानमिन्द्रियाणि हि ॥ ३५ ॥
एतस्मादिति वाक्येन ब्रह्मणोऽनन्तरं जगत् ॥
कार्यमित्येव कलनात् सर्वस्योत्पत्तिरीशतः ॥ ३६ ॥
अभिध्यानेन लिङ्गेन तदेतन्नोपपद्यते ॥
क्रमविशेषपरत्वाद्वा वाक्यस्यास्येति हेतुतः ॥ ३७ ॥

अत्रापि सर्वकार्याणां क्रम एव प्रतीयते ॥
श्रुत्यन्तरेण सिद्धोऽत्र क्रमोऽपि गगनादिषु ॥ ३८ ॥
प्रतीयते पाठलिङ्गाभ्यां सह प्राणभूतयोः ॥
उत्पद्येते अन्तराले विज्ञानमनसी ह्यपि ॥ ३९ ॥
साक्षाद् ब्रह्मण एव स्यादतः सर्वस्य सम्भवः ॥
उत्पत्तेरविशिष्टत्वादेतस्मादिति वाक्यतः ॥ ४० ॥
न क्रमोऽन्यश्रुतेर्वाक्यात् सिद्धक्रमविरोधतः ॥
पृथिव्यास्त्विति वाक्येन क्रमान्तरप्रतीतितः ॥ ४१ ॥
ततोऽव्यक्तादिसद्देहात् परस्मात् परमात्मनः ॥
उत्पत्तिः सर्वकार्याणामित्यतः सकलाऽऽरवाः ॥ ४२ ॥
तदात्मभूतं सद् ब्रह्म मुख्यवृत्त्या वदन्ति हि ॥
नन्वेमखिलैः शब्दैर्ब्रह्म चेत् प्रतिपाद्यते ॥ ४३ ॥
तदा समस्तशब्देभ्यो वस्तु व्यवहृतिः कथम् ॥
तत्राह ब्रह्मभिन्नेऽत्र स्थावरे जङ्गमे तथा ॥ ४४ ॥
व्यपदेशस्तत्पदानां भाक्त इत्यवगम्यताम् ॥
वाच्यप्रकार्येकदेशे भज्यते हीति भाक्तता ॥ ४५ ॥
सर्वप्रकारिब्रह्मणो हि प्रकाराखिलवस्तु यत् ॥
तद्ग्राह्यऽक्षाद्यखिलप्रमाणाविषयत्वतः ॥ ४६ ॥
प्रकारिब्रह्ममात्रस्य प्रतीतिः श्रुतिसंश्रुतेः ॥
प्रकारोऽयं प्रकारीति प्रतीतिविरहात् तथा ॥ ४७ ॥
प्रतीतिभावभावित्वात् पर्यवस्येत् प्रकारिणि ॥
तत्तद्वस्तुमात्रेऽतस्ते ते शब्दाः समस्तकाः ॥ ४८ ॥
वाच्यैकदेशे सम्भज्य व्युदिश्यन्ते न संशयः ॥
तेजःप्रभृतिभिः शब्दैस्तेजःप्रभृतिवाचकैः ॥ ४९ ॥
ब्रह्मणो व्यपदेशः स्यादमुख्य इति चेन्न हि ॥

चराचरवाचिशब्दो मुख्यो ब्रह्मणि तत् कुतः ॥ ५० ॥
नामरूपश्रुतिवाक्याद् वाचकत्वस्य निर्णयात् ॥
कृत्स्नस्य गगनादेव परस्माज्जनिरीरिता ॥ ५१ ॥
इदानीं जीववर्गस्य जन्माऽस्ति किमु तन्न हि ॥
अस्तीति युक्तमेकस्य विज्ञानाज्जायतेऽखिलम् ॥ ५२ ॥
प्रतिज्ञेयं हि युज्येत यदा स्यादखिलं ततः ॥
यतो वेसादिवाक्येन जीवाद्युत्पत्तिरुच्यते ॥ ५३ ॥
ब्रह्माभिन्नत्वतो जीवो नोत्पन्न इति चेन्न हि ॥
ब्रह्मत्वात् खादिरप्येवं नोत्पन्न इति निश्चयात् ॥ ५४ ॥
अत उत्पद्यते जीव इति प्राप्तेऽभिधीयते ॥
उत्पद्यते न जीवात्मा जनिमृत्युनिषेधतः ॥ ५५ ॥
न जायते म्रियते वा विपश्चिदिति वाक्यतः ॥
द्वावजाविति वाक्याच्च जीवजन्म निषिध्यते ॥ ५६ ॥
नचैकज्ञानतः सर्वविज्ञानस्य प्रतिज्ञया ॥
कथं भाव्यं हीति वाच्यं यत इत्थं विनिर्णयः ॥ ५७ ॥
अवस्थान्तरसम्प्राप्तिर्जीवानां जन्मशब्दभाक् ॥
स्वरूपतान्यथाभावो वियदादेजर्डस्य च ॥ ५८ ॥
जीवस्य ज्ञानसङ्कोचविकासात्मक एव हि ॥
अन्यथाभाव उद्दिष्टः प्रतिषेधस्वरूपतः ॥ ५९ ॥
भोग्यभोक्तृनियन्तॄन् वै संश्लिष्टान् प्रतिपाद्य च ॥
उत्पत्त्यादि भोग्यगतं भोक्तरि प्रतिषिध्य च ॥ ६० ॥
नित्यतां प्रतिपाद्याऽथ तथा भोग्यगतं पुनः ॥
उत्पत्त्यादिभोक्तृगतमपुरुषार्थाश्रयत्वकम् ॥ ६१ ॥
नियन्तरि निषिध्यैवं नित्यं तां निरवद्यताम् ॥
सदा सर्वज्ञतां चापि सत्यसङ्कल्पतां तथा ॥ ६२ ॥

करणाधिपाधिपत्वं च विश्वेशत्वं तथैव च ॥
प्रतिपाद्य सर्वदेश्यं चेतनस्याचितस्तथा ॥ ६३ ॥
शरीरत्वं नियन्तारं प्रत्येव प्रतिपाद्यते ॥
अतस्तच्चिदचिद्वस्तुशरीरं तत्प्रकारकम् ॥ ६४ ॥
अतस्तद् ब्रह्मणश्चिदचिद्विभक्ताव्यपदेशभाक् ॥
सूक्ष्मात्मचिदचिद्वस्तुशरीरं ब्रह्मकारणम् ॥ ६५ ॥
कारणावस्थमेवेति तस्य संज्ञेति गम्यताम् ॥
कारणावस्थमेवेदं नामरूपाविभागवत् ॥ ६६ ॥
चिदचिच्छरीरिस्थूलं कार्यावस्थं भवत्यलम् ॥
तत्राप्यचेतनांशं यत् कारणावस्थयाऽन्वितम् ॥ ६७ ॥
शब्दादिहीनं भोग्यत्वायोग्यं मत्कार्यतां गतम् ॥
शब्दादिमत्तया योग्यं स्वरूपाद्विकृतिं गतम् ॥ ६८ ॥
चिदंशस्य तु भोक्तृत्वयोग्यतार्थं स्वरूपतः ॥
अन्यथाभावहीनत्वं किन्तु ज्ञानं स्वधर्मिणि ॥ ६९ ॥
विकासभावं सम्प्राप्य भोक्तृत्वं घटयत्यलम् ॥
यावत् संकुचितं ज्ञानं तावद्भोक्ता न चेतनः ॥ ७० ॥
सृष्टेः प्राग् भोग्यविरहात् कुण्ठितज्ञानधर्मकम् ॥
अभोक्ता चेतनोऽस्त्येवं भोग्यभावे स एव तु ॥ ७१ ॥
विकासज्ञानधर्मत्वाद् भोक्ता सृष्टौ हि चेतनः ॥
एवं हिकारणावस्थात् कार्यावस्थाद् विवेकतः ॥ ७२ ॥
ज्ञेयो हरिः सदा सत्यः कल्याणगुणसागरः ॥
तेन संमिश्रणं भोग्यभोक्तृभ्यां सर्वदाऽस्ति हि ॥ ७३ ॥
सर्वभेदश्रुतिर्मुख्या केवलाद् भेदसंश्रुतिः ॥
वियदादिरिव जीवो नोत्पद्यत इति रूपितम् ॥ ७४ ॥
तत्प्रसङ्गेन जीवस्य स्वरूपं विनिरूप्यते ॥

आत्मस्वरूपं चिन्मात्रं किं वागन्तुकचिद्गुणम् ॥ ७५ ॥
किं वा ज्ञातृत्वमेवास्य स्वरूपमिति संशये ॥
युक्तं चिन्मात्रमेवास्य स्वरूपमिति तच्छ्रुतेः ॥ ७६ ॥
विज्ञानात्मनि यस्तिष्ठन्निति काण्वास्तथाऽपरे ॥
अधीयते हि विज्ञानं यज्ञं सन्तनुतेऽपि च ॥ ७७ ॥
इति श्रुतिभ्यां विज्ञानस्वरूपात्मा प्रकीर्त्तितः ॥
अपर आह तु जीवस्य ज्ञानत्वं चापि ज्ञातृता ॥ ७८ ॥
स्वाभाविकतया चेत् स्यात् सर्वगस्य तदा सदा ॥
सर्वस्मिन्नुपलब्धिः स्यात् करणानां किमर्थता ॥ ७९ ॥
सुप्तिमूर्च्छादिषु सतश्चैतन्यानुपलम्भनात् ॥
जाग्रत्सामग्रीसम्पत्तौ चैतन्यस्योपलम्भनात् ॥ ८० ॥
अतो जीवस्य चैतन्यं न स्वाभाविकमिष्यते ॥
तथा सर्वगतत्वं च सर्वस्मिन् कार्यदर्शनात् ॥ ८१ ॥
सर्वत्र संनिधानाच्च गमनागमनादिकम् ॥
शरीरगमनेनैव सति कार्यस्य सम्भवे ॥ ८२ ॥
तद्गतेः कल्पनायां वै प्रमाणं नोपलभ्यते ॥
श्रुतिः सुषुप्तिवेलायां स्वाज्ञानं दर्शयत्यलम् ॥ ८३ ॥
अयमस्मीति नो जाने सम्प्रत्यात्मानमेव मे ॥
न प्रेत्य संज्ञाऽस्तीत्येवं श्रुत्या मुक्तावपि स्वयम् ॥ ८४ ॥
प्रदर्श्यते ज्ञानहानिर्ज्ञानरूपस्तु तद्गुणात् ॥
इति प्राप्ते ज्ञ एवायं ज्ञाताऽप्यात्माऽस्ति नो जडः ॥ ८५ ॥
एष इत्यादिवाक्येन श्रोतृत्वादिनिरूपणात् ॥
आत्मा ज्ञाता भवत्येव न शङ्क्यं किञ्चिदस्ति हि ॥ ८६ ॥
नन्वात्मा सर्वगो ज्ञाता चेत्तु सर्वत्र सर्वदा ॥
उपलब्धिः कुतो न स्यादित्यत्र न विशङ्क्यताम् ॥ ८७ ॥

सर्वगोऽप्यणुरेवायमुत्क्रान्त्यादिसमीरणात् ॥
प्रद्योतेनैष आत्माऽयं मूर्ध्नो वा चक्षुषोऽथवा ॥ ८८ ॥
निष्क्रामति तथा लोकाल्लोकान्तरगतिश्रुतेः ॥
शरीरेण वियोगो हि स्थिरस्याऽप्यात्मनो भवेत् ॥ ८९ ॥
गत्यागती त्वणुत्वेन विना नैवात्मनो ह्यमू ॥
योऽयमित्यादिवाक्येन जीवं प्रस्तुत्य चोत्तरम् ॥ ९० ॥
स वा एषेति वाक्येन महत्त्वं श्रूयते कथम् ॥
तदणुर्जीवो नैवायमिति चेन्नेतरात्मनः ॥ ९१ ॥
प्राज्ञस्यात्राधिकाराद्वा अणुर्जीवो व्यवस्थितः ॥
यद्यप्युपक्रमे जीवः प्रस्तुतोऽथापि वाक्यतः ॥ ९२ ॥
यस्यानुवित्त आत्मेति मध्ये सम्बोध्यते परः ॥
अतो महत्त्वं तस्यैव न जीवस्येति निर्णयः ॥ ९३ ॥
एषोऽणुरात्मा संवेद्यो यस्मिन् प्राणास्तु पञ्चधा ॥
संविशन्तीति वाक्यात्तु जीवोऽणुपरिमाणकः ॥ ९४ ॥
बालाग्रशतभागस्य शतधा कल्पितस्य च ॥
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९५ ॥
आराग्र इति वाक्याद्वै जीवोऽणुपरिमाणकः ॥
अथ स्यादात्मनोऽणुत्वं वेदनाऽखिलदेहगा ॥ ९६ ॥
नोपपद्येत यदिति तन्नैवमविरोधतः ॥
यथा चन्दनबिन्दुर्वै देहैकावयवे गतः ॥ ९७ ॥
देहव्यापिनमाह्लादं जनयत्येवमेव हि ॥
एकदेशस्थितोऽप्यात्मा देहव्याप्तां स्ववेदनाम् ॥ ९८ ॥
सुखं चानुभवत्येवं परिहारो मतान्तरे ॥
एकदेशस्थितो नात्मा मैवं ब्रूहि हृदि स्थितेः ॥ ९९ ॥
अयमात्माहृदीत्येवं श्रवणाच्छ्रुतिमण्डले ॥

आत्मा वा स्वगुणेनाप्यं ज्ञानेनाऽखिलदेहमः॥ १०० ॥
आलोकवत् ततो दुःखं सुखं देहैकदेशगम् ॥
साक्षादनुभवत्येव सर्वदाऽणुस्वरूपकः ॥ १०१ ॥
अप्येकदेशस्थमणेः प्रभा स्यात् सर्वदेशगा ॥
तथा हृत्स्थस्य जीवस्य ज्ञानं सकलदेहगम् ॥ १०२ ॥
मणिप्रभेव ज्ञानं हि स्वाश्रयव्यतिरेकतः ॥
स्थितौ न बाधकं किञ्चिच्छ्रुतिन्यायविनिर्णयात् ॥ १०३ ॥
विज्ञानमात्रमेवात्मा चेत् कथं तद्गुणो भवेत् ॥
गुणो गुणिस्वरूपो न कदाप्यत्रोच्यते शृणु ॥ १०४ ॥
यथा पृथिव्यां गन्धो हि गुणत्वेनोलभ्यते ॥
व्यतिरेकात् तथा ज्ञानं ज्ञातुर्भिन्नो गुणो भवेत् ॥ १०५ ॥
श्रुतिरित्थं दर्शयति जानात्येव हृदि ह्ययम् ॥
विज्ञानं तनुते यज्ञं विज्ञाने तिष्ठति स्वयम् ॥ १०६ ॥
विज्ञातुर्लुप्यते नैव विज्ञानामिति वाक्यतः ॥
गुणगुणिनोस्तु तादात्म्यं व्यवहारनियामकम् ॥ १०७ ॥
यथा तादात्म्यसम्बन्धाद् विषयो विषयी भवेत् ॥
तत्र ज्ञानं विषयतासम्बन्धाज्जायते तथा ॥ १०८ ॥
गुणो गुणी भवत्येव विषये विषयत्ववत् ॥
घटे तद्घटतादात्म्यं यदि न स्यात् तदा घटे ॥ १०९ ॥
तद्घटस्य हि भेदः स्यादतो हि घटवान् घटः ॥
ज्ञानादिगुणवानात्मा तथा तादात्म्यतो भवेत् ॥ ११० ॥
ननु—
ह्यानस्वरूपमत्यन्तनिर्मलं परमार्थतः ॥
इत्यादिषु ज्ञानमेव ह्यात्मेति व्यपदिश्यते ॥ १११ ॥
अत्राह—

विज्ञानगुणसारत्वादात्मा विज्ञानमुच्यते ॥
अस्यात्मनो हि विज्ञानं सारभूतो गुणोत्तमः ॥ १.१२ ॥
यथा विपश्चित्प्राज्ञो हि ज्ञानशब्देन पठ्यते ॥
सदात्मभाविधर्मत्वाद् विज्ञानस्योपदिश्यते ॥ ११.३ ॥
तत्पदेन न दोषोऽस्ति गोत्वधर्मेण गोरिव ॥
ज्ञानवत्स्वप्रकाशत्वादात्मा ज्ञानपदेन च ॥ १.१.४ ॥
व्यपदिश्यतेऽबाधकादिति चेन्न समुच्चयः ॥
ननु सुप्तौ ज्ञानहानेः कथमात्माऽनुबन्धिता ॥ १.१.५ ॥
ज्ञानधर्मस्येति मैवं सतोऽभिव्यक्तियोगतः ॥
विद्यमानं यथा पुंस्त्वं यौवनेन प्रकाश्यते ॥ १.१६ ॥
सुषुप्तौ विद्यमानस्य तथा ज्ञानस्य जागरे ॥
प्रकाशसम्भवादात्मधर्मता नैव हीयते ॥ १.१.७ ॥
सप्तधातुमयत्वं हि शरीरायतनं सदा ॥
अहमर्थप्रकाशस्तु सुषुप्त्यादौ समर्थितः ॥ १.१.८ ॥
ज्ञानस्य विद्यमानस्य विषयग्रहणं पुनः ॥
समर्थितं जागरादौ ज्ञातृत्वादय आत्मनि ॥ १.१९ ॥
समर्थिता अतो ज्ञेय आत्मा ज्ञातैव निश्चितम् ॥
न प्रेत्य संज्ञाऽस्तीति यत् तन्न मुक्तस्य वक्ष्यति ॥ १२० ॥
ज्ञानहानिं किन्तु जन्मनाशादीनां हि दर्शनम् ॥
निषेधस्तथ तस्यैव सर्वगत्वे हि दूषणम् ॥ १.२१ ॥
उच्यते ज्ञानमात्रत्वे नित्यमेवोपलभ्यताम् ॥
अथवा नोपलभ्यत्वं नित्यमात्मनि शङ्क्यताम् ॥ १.२२ ॥
कारणायत्तप्रत्यक्षे सर्वेषामात्मनां पुनः ॥
सर्वगत्वेन करणैः सदा सम्बन्धवत्तया ॥ १.२३ ॥
सर्वभोगस्य साङ्कर्यं स्यादतोऽणव एव ते ॥

आत्माऽणुपरिमाणोऽयं ज्ञातेति विनिरूपितम् ॥ १२४ ॥
स कर्ता किमकर्त्ता वेत्येवं हि परिसंशये ॥
युक्तं गुणगकर्त्तृत्वं स्वात्मन्येवाध्यवस्य हि ॥ १२५ ॥
श्रुत्या स्मृत्या यतोऽकर्त्ता स्वत आत्मा निगद्यते ॥
कार्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ॥ १२६ ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
इत्यादिवाक्यात् कर्तृत्वं प्रकृतेरेव युज्यते ॥ १२७ ॥
भोक्तृत्वमेव पुरुषे इति प्राप्ते प्रचक्ष्महे ॥
आत्मैव कर्त्ता, न गुणाः कुतः शास्त्रार्थवत्तया ॥ १२८ ॥
यजेत स्वर्गकामो हि मुमुक्षुर्ब्रह्मसेवनम् ॥
कुर्वीतेत्यादिशास्त्रं हि फलमात्मनि शंसति ॥ १२९ ॥
फलभोक्तारमात्मानं हि रुग् नान्यो नियोज्यते ॥
कर्त्तृत्वे किञ्च नो युक्तं कर्त्रचेतनमत्र वै ॥ ३० ॥
हननं प्रत्यकर्त्तृत्वमात्मनः श्रूयते तु यत् ॥
तदात्मनो हि नित्यत्वाद्धन्तव्यत्वाद्यभावतः ॥ १३१ ॥
गुणानामेव कर्त्तृत्वं गीतादिस्मृतिनिश्चितम् ॥
तदस्य गुणसंसर्गकृतं सांसारिकस्य हि ॥ १३२ ॥
न स्वरूपप्रयुक्तं तत् केवलस्यात्मनो भवेत् ॥
अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् ॥ १३३ ॥
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥
इति पञ्चकसापेक्षकर्त्तृत्वं केवलात्मनः ॥ १३४ ॥
कर्त्तृत्वं मन्यते योऽयं न स पश्यति दुर्मतिः ॥
उपादाने तु प्राणानां विहारेऽप्यात्मनस्तथा ॥ १३५ ॥
एवमेवैष वा एतानिति श्रुत्योपदिश्यते ॥
कर्त्तृत्वमन्यथा बुद्धेर्निर्देशो स्याद् विपर्ययः ॥ १३६ ॥

तद्विज्ञानपदेनात्मा प्रतिपाद्योऽन्यथा तु वै ॥
करणतृतीयापत्तिर्बुद्ध्यर्थकपदोत्तरम् ॥ १३७ ॥
भोक्तुरन्यस्य कर्तृत्वं न युक्तमुभयोस्तयोः ॥
एकत्र सत्त्वसम्बन्धाद् भिन्नवृत्तिप्रखण्डनात् ॥ १३८ ॥
सर्वसाधारणत्वेन प्रकृतेश्चेत् सकर्तृता ॥
सर्वकर्माणि सर्वेषां भोगाय स्युर्न संशयः ॥ १३९ ॥
भोक्तुरन्यस्य कर्तृत्वं न युक्तमुभयोस्तयोः ॥
एकत्र सत्त्वसम्बन्धाद् भिन्नवृत्तिप्रखण्डनात् ॥ १४० ॥
उपाध्यभावापत्त्या वै न बुद्धेः कर्तृतेष्यते ॥
न हि बुद्धिः समाधातुं समर्था कुत्र चिद् भवेत् ॥ १४१ ॥
अत आत्मैव कर्ता स्यात् सपन्नः साधनैरपि ॥
करोतीच्छानुगुण्येन तक्षा वास्यादिभिर्यथा ॥ १४२ ॥
आत्मबुद्धेस्तु कर्तृत्वे भोगवाञ्छादि कारणम् ॥
नियतं नेति कर्तृत्वं बुद्धिगं सर्वदा भवेत् ॥ १४३ ॥
यदि जीवात्मकर्तृत्वं स्वातन्त्र्येणेह चोच्यते ॥
अतो विधिनिषेधादिशास्त्रसार्थक्यमापतेत् ॥ १४४ ॥
यो हि स्वबुद्ध्या शक्तोऽत्र प्रवृत्तौ वा निवर्तने ॥
स एव स्यान्नियोज्यो नाऽप्राप्ते सत्येवमुच्यते ॥ १४५ ॥
जीवात्मनां हि कर्तृत्वं परमात्मैकहेतुतः ॥
अन्तः प्रविष्टः शास्तेति श्रुत्यादिप्रतिपादनात् ॥ १४६ ॥
पुरुषेण कृतं यत्नमपेक्ष्य परमेश्वरः ॥
तस्यानुमतिदानेन प्रवर्तयति कर्मणि ॥ १४७ ॥.
अन्तरेण परेशस्यानुमतिर्न प्रवर्तनम् ॥
य ईश्वरानुकूल्ये हि वर्तते नितरां जनः ॥ १४८ ॥
अनुगृह्णन् स भगवान् कल्याणेष्वेव कर्मसु ॥

तद्रुचिं जनयत्येव प्रतिकूलं विपर्ययात् ॥ १४९ ॥
जीवात्मनां हि कर्त्तृत्वं परेशायत्तमीरितम् ॥
इदानीं किमयं जीवो भिन्नः स्यात् परमात्मनः ॥ १५० ॥
आहोस्वित् परमं ब्रह्म स्वोपाधिपरिकल्पितम् ॥
किं वा ब्रह्मांश एव स्यादित्येवं संशयः श्रुतेः ॥ १५१ ॥
तत्राद्यपक्षो युक्तोऽत्र ज्ञाज्ञावित्यादिवाक्यतः ॥
उपचारादभेदोऽत्राभेदश्रुतिविबोधितः ॥ १५२ ॥
ब्रह्मैकदेशो ब्रह्मांशो जीवश्चेद् ब्रह्म दोषवत् ॥
ब्रह्मैकदेशजीवस्थदोषाणां ब्रह्मसंश्रयात् ॥ १५३ ॥
भ्रान्तं ब्रह्मैव जीवो वा ब्रह्मभावोपदेशतः ॥
अनाद्युपाध्यवच्छिन्नं जीवो वाऽभेदसंश्रुतेः ॥ १५४ ॥
इति प्राप्तं प्रतिक्षिप्य सिद्धान्तः प्रतिपाद्यते ॥
ब्रह्मांश एव जीवोऽयं नानात्वव्यपदेशतः ॥ १५५ ॥
तथैकत्वोपदेशाच्च नान्यथोभयथा भवेत् ॥
उपदेशस्तथा हि स्यात् स्रष्टृत्वादिप्रकारकः ॥ १५६ ॥
तत्त्वमस्यादिवाक्येन तथाऽभेदप्रकारकः ॥
उभाभ्यामुपदेशाभ्यां ब्रह्मांशो जीवचेतनः ॥ १५७ ॥
जीवाभेदः सर्वजीवव्यापित्वेनोपदिश्यते ॥
पादोऽस्य विश्वा भूतानीत्येवमत्र प्रभाषणात् ॥ १५८ ॥
ब्रह्मांशत्वं हि जीवानां स्पष्टमेव न संशयः ॥
ब्रह्मैकदेशजीवस्य ब्रह्मांशत्वनिरूपणे ॥ १५९ ॥
दोषा जीवगता ये वै ते स्युः सर्वे परात्मनः ॥
इत्याशङ्क्य समाधानं ज्वलदग्निप्रकाशवत् ॥ १६० ॥
यथाऽग्न्यादेः प्रकाशोंऽशो गोत्वादीनि गवादिके ॥
अंशः स्याद् देहिनो देहो ह्यंश एवं प्रकीर्त्तितः ॥ १६१ ॥

एकवस्त्वेकदेशत्वमंशलक्षणमीरितम् ॥
वैलक्षण्येऽपि चांशत्वंविशेषणविशेष्ययोः ॥ १६२ ॥
भवेदतो विशेष्ये न दोषा अंशगताः पुनः ॥
वैलक्षण्याद् द्वयोरत्र विशेषणविशेष्ययोः ॥ १६३ ॥
इदमाश्रित्य श्रुत्यादौ भेदनिर्देश ईरितः ॥
स्वपृथक्सिद्ध्यनर्हत्वाद् विशेषणविशेष्ययोः ॥ १६४ ॥
अभेदो बोध्यते श्रुत्या न विरोधो मनागपि ॥
प्रभाप्रभावतोरिव शक्तिशक्तिमतोर्यथा ॥ १६५ ॥
तथा देहात्मभावेन जगद्ब्रह्मात्मनोरिह ॥
अंशांशिभावसम्बन्धं स्मरन्ति परमर्षयः ॥ १६६ ॥
सर्वस्य ब्रह्मणोंऽशत्वे केचिद् वेदाधिकारिणः ॥
केचिन्नेत्येव संस्पृश्याः केचिन्नेति कथं भवेत् ॥ १६७ ॥
विशेष इत्याशङ्क्याह देहभेदाद् भवेदयम् ॥
अग्नेर्यथैकरूपत्वेऽप्येवं सम्बन्धभेदतः ॥ १६८ ॥
श्रोत्रियाऽग्निः श्मशानाग्निः स्पृश्यास्पृश्यौ यथैव तौ ॥
अनुज्ञापरिहारौ च देहसम्बन्धभेदतः ॥ १६९ ॥
तथात्मनः परिज्ञेयौ शुच्यशुच्यादिदेहिनः ॥
ब्रह्मांशत्वादिनैकत्वमण्वात्मनि हि यद्यपि ॥ १७० ॥
परस्परमणुत्वेन प्रतिदेहं विभिन्नता ॥
अत एव भवत्येवं व्यवस्था भोगभाविका ॥ १७१ ॥
अविद्याकृतोपाधितो व्यवस्था चेदिहोच्यते ॥
अखण्डैकरसस्यास्य प्रकाशात्मन एव च ॥ १७२ ॥
स्वरूपं हि तिरोधायोपाधिभेदोपपादने ॥
उद्दिष्टो हेतुराभासः प्रकाशात्मविनाशतः ॥ १७३ ॥
आभासा इति पाठे तु कल्पितोपाधिभेदके ॥

आभासा हेतवः सर्वे इत्यर्थः सूत्रसङ्गतः ॥ १७४ ॥
वास्तवात्मन एकत्वाद् भोगसाङ्कर्यमापतेत् ॥
अदृष्टनियतोपाधिकृतभेदोऽत्र मन्यते ॥ १७५ ॥
तस्यापि नियमाभावादव्यवस्थैव केवलम् ॥
एकमेव ब्रह्मरूपं विविधोपाधिसङ्गतम् ॥ १७६ ॥
तथाऽप्युपाधिब्रह्मदेशभेदाद् भाव्यव्यवस्थया ॥
इति चेत् सङ्गतं नैतत् प्रदेशानां हि सर्वतः ॥ १७७ ॥
उपाध्यन्तर्गतत्वेन व्यवस्थाभावसम्भवात् ॥
पूर्वत्र वेदबाह्यानां सूत्राभ्यां दोष उद्धृतः ॥ १७८ ॥
वादावलंविनामत्र दोषः सम्यङ्निरूप्यते ॥

इति श्रीभाष्यवार्तिके द्वितीयाऽध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

ब्रह्मात्माभिन्नाकाशादेः कृत्स्नस्योत्पत्तिरूपणे ॥
अपोदितोऽन्यथाभावस्तत्प्रसङ्गाद् विशोधितम् ॥ १ ॥
जीवस्वरूपमधुना हीन्द्रियप्राणसङ्गतः ॥
उत्पत्त्यादिप्रकारोऽत्र शोध्यते बुद्धिपूर्वकम् ॥ २ ॥
तत्रेन्द्रियाणां कार्यत्वं जीववद्वियदादिवत् ॥
युक्तं जीववदेवात्र वाद्येवं प्राह सादरम् ॥ ३ ॥
इन्द्रियाणि तथा प्राणा जीववन्नोद्भवन्ति हि ॥
नोत्पत्तिः श्रूयते जीवे तथाऽत्रापीति हेतुतः ॥ ४ ॥
असद्वेत्यादिवाक्येन प्रलयेऽवस्थितिश्रुतेः ॥
जीवोत्पत्तिर्यथैवोक्ता प्राणोत्पत्तिस्तथैव हि ॥ ५ ॥
तत्रोच्यते समाधानं वियदादिवदेव च ॥
प्राणोत्पत्तिः सदेवेदमग्र इत्यादिवाक्यतः ॥ ६ ॥
सृष्टेः प्रागात्मनो ह्येवमेकत्वस्यावधारणात् ॥
एतस्मादपि सद्वाक्यादुत्पत्तिश्रवणादपि ॥ ७ ॥
तथा पूर्वमवस्थानासम्भवाच्चेन्द्रियादिकम् ॥
उत्पद्यते न जीवस्य जन्मवच्छङ्क्यतेऽन्यथा ॥ ८ ॥
आत्मनो जन्मनित्यत्वश्रुतिवन्नेह तद्द्वयम् ॥
न श्रूयतेऽतः प्राणानामुत्पत्तिर्वियदादिवत् ॥ ९ ॥
प्राणमेवेति वाक्येऽस्मिन् प्राणशब्दः परात्मनि ॥
प्रसिद्ध इति तस्माद्धि प्राणादुत्पत्तिरीरिता ॥ १० ॥
बहुत्वश्रवणं गौणं प्राणा इत्यादिवाक्यगम् ॥
बह्वर्थाऽसम्भवात्तस्य सृष्टेः प्रागात्मनः श्रुतेः ॥ ११ ॥
परात्मवाचकप्राणशब्दोऽत्रेति विनिर्णयः ॥
यतोऽभिन्नं ततः सर्वं वाचा यत् परिकीर्त्यते ॥ १२ ॥
तत्सर्वं जायते पश्चान्नाकाद्युत्पत्तिपूर्वकम् ॥

तानीन्द्रियाणि नो सप्त भवन्त्येकादशैव हि ॥ १३ ॥
हस्तादीनां शरीरस्थभोगोपकरणत्वतः ॥
आदानादिकार्यभेदो दृश्यतेऽतोऽत्र सन्ति ते ॥ १४ ॥
सर्वेऽनन्ता इति श्रुत्या विभुत्वमितिचेन्न हि ॥
उत्क्रान्तिश्रवणात् तेषां पारिमित्यं निरूप्यते ॥ १५ ॥
आनन्त्यश्रवणं चैषामुपास्यार्थं न संशयः ॥
प्राणाद्विशेषभूतादिकार्यबाहुल्यतस्तथा ॥ १६ ॥
एकत्वनिश्चयात् सृष्टेः प्रागित्थं परमात्मनः ॥
भिन्नमुत्पद्यते सर्वं प्राणादिर्गगनादिवत् ॥ १७ ॥
प्राणादि वायुमात्रं न क्रियारूपं न चापि हि ॥
एतस्माज्जायते प्राण इति भिन्नोपदेशतः ॥ १८ ॥
नापि भूतविशेषोऽयं प्राणः किन्त्ववरात्मनः ॥
भोगोपकारणात्मैव चक्षुरादिर्यथाऽत्र हि ॥ १९ ॥
चक्षुरादिवदस्यापि करणत्वे शेषरूपया ॥
क्रियया भवितव्यं तदभावान्नेन्द्रियादिवत् ॥ २० ॥
इत्याशङ्क्य समाधानं क्रियात्वाभावतो भवेत् ॥
जीवं प्रत्युपकाराख्यक्रियाया विरहत्वतः ॥ २१ ॥
दोष उद्भाव्यते योऽपि स नास्तीति कुतः शृणु ॥
देहेन्द्रियधारणादिक्रिया दर्शयति श्रुतिः ॥ २२ ॥
प्राणस्योत्क्रमणे जाते देहः पाप्मा भवेदिति ॥
वागाद्युत्क्रमणेऽप्येवं शरीरस्थितिदर्शनात् ॥ २३ ॥
प्राणाऽभावे शरीरस्य क्षणमप्यस्थितेश्च हि ॥
व्यानादयो वायुवर्गाः प्राण एव न संशयः ॥ २४ ॥
अणुश्चायं पूर्ववच्च समुत्क्रामणसंश्रुतेः ॥
परिच्छिन्नस्वरूपत्वमणुत्वमिति न त्वणुः ॥ २५ ॥

जीवात्मदेहप्राणादिदेवानामभिमानिनाम् ॥
परेशमननायत्तं कार्यं शब्दप्रमाणतः ॥ २६ ॥
परमात्माऽधिष्ठितत्वं नित्यं सर्वस्य वस्तुनः ॥
तत्स्वरूपानुबन्धित्वात् सर्वाधिष्ठातृताऽऽत्मनि ॥ २७ ॥
तत् सृष्ट्वेत्यादिवाक्येन चिदचिद्वस्तुमात्रके ॥
अन्तर्नियमनत्वेन प्रवेशः परिपठ्यते ॥ २८ ॥
स्वरूपानुबन्धी स स्यात् स्मर्यते जगति स्थितः ॥
यतः सर्वाणीन्द्रियाणि प्राणभिन्नानि सन्ति ॥ २९ ॥
ततः सर्वत उत्कृष्टा प्राणा इन्द्रियवर्गतः ॥
जीवनिष्ठं हि कर्तृत्वं परायत्तमितीरितम् ॥ ३० ॥
स्वेन्द्रियादिष्वधिष्ठानं परायत्तमनन्तरम् ॥
प्रपञ्चव्यष्टिसृष्टिर्या सा किं जीवेन रच्यते ॥ ३१ ॥
उत तेजःप्रभृतिकशरीरेण परेण हि ॥
युक्तं हिरण्यगर्भाख्यजीवेन सृज्यते जगत् ॥ ३२ ॥
अनेनेति श्रुतेर्जीवकर्तृकत्वस्य निर्णयात् ॥
न हि स्वेन स्वरूपेण परमात्मेत्येवमैक्षत ॥ ३३ ॥
नामरूपे व्याकरोमीत्येवं किन्त्वंशभागिना ॥
ननु—
चारेणानुप्रविश्यैवं बलं सङ्कलयाम्यहम् ॥ ३४ ॥
करवाणीत्युत्तमः पुरुषः सम्भवेदितिचेन्न हि ॥
राजचारस्वरूपस्य भिन्नत्वादिह तन्न हि ॥ ३५ ॥
जीवस्येशांशरूपत्वात् तेन रूपेण तद्‌द्वयम् ॥
प्रवेशो व्याकृतिश्चैव लक्षणा न प्रसज्जते ॥ ३६ ॥
तस्माज्जीवस्वरूपेण नामरूपीयव्याकृतिः ॥
परात्मना भवत्येवं प्राप्तं समभिधीयते ॥ ३७ ॥

नामरूपव्याकरणं त्रिवृत्कुर्वत ईश्वरात् ॥
जीवेनानेनात्मनेति समकर्तृत्वप्रत्ययात् ॥ ३८ ॥
जीवेशाभेदबुद्धिस्तु तुल्याधिकरणत्वतः ॥
जीवः शरीरमस्येति जीवशब्दार्थ ईश्वरः ॥
तेज ऐक्षत हीत्यादौ तेजआदिशरीरकम् ॥ ३९ ॥
परमेवोच्यते ब्रह्म देहदेहिस्वभावतः ॥
हिरण्यगर्भो जीवस्य समष्टिर्जीव उच्यते ॥ ४० ॥
स शरीरं परस्येति व्याकारोतीश्वरोऽखिलम् ॥
नामरूपात्मकं विश्वं तत्र प्रविशति स्वयम् ॥ ४१ ॥
चतुर्मुखे यत् कर्तृत्वं चतुर्मुखशरीरके ॥
परस्मिन् घटते मुख्यममुख्यमितरत्र तु ॥ ४२ ॥
परस्परमसंबद्धास्तेजोऽबन्नादयः पुनः ॥
विशेषसृष्टिकरणेऽसमर्था इति तेषु वै ॥ ४३ ॥
सामर्थ्यार्थं तदैकैकं त्रिवृतं त्रिवृतं कृतम् ॥
ननु—
त्रिवृत्करणस्य जीवेषु संभवाज्जीवकर्तृकम् ॥ ४४ ॥
नामरूपव्याकरणं नेशकर्तृकमुच्यताम् ॥
यदग्ने रोहितं रूपं तद्रूपं तेजसस्तथा ॥ ४५ ॥
यच्छुक्लं तदपां प्रोक्तं कृष्णं तत्त्वन्नसम्भवम् ॥
इत्यादिना ब्रह्मसृष्टाग्न्यादित्यचन्द्रविद्युतः ॥ ४६ ॥
प्रदृश्यते त्रिवृत्कार्यमेषु व्याकरणोत्तरम् ॥
इति प्राप्ते नोक्तयुक्तमग्न्यादित्यादिदैवते ॥ ४७ ॥
त्रेधेति नैव त्रिवृतः करणं ह्युपदिश्यते ॥
परिणामस्त्रिधा किन्तु शब्दात् सम्यक् प्रतीयते ॥ ४८ ॥
अतः पुरीषमांसानि मनांसि च क्षितेस्ततः ॥

विकारा मूत्ररुधिरप्राणा ये जलजास्तु ते ॥ ४९ ॥
तथाऽस्थिमज्जावाचस्तु विकारास्तैजसोऽभवन् ॥
मनो हि सोम्यान्नमयं प्राण आपोमयः स्मृतः ॥ ५० ॥
तेजोमयी वागिति च वाक्यशेषाविरोधतः ॥
त्रिवृत्कृतस्य भूम्यादेः पुरुषप्राप्त्यनन्तरम् ॥ ५१ ॥
अन्नं प्राशितमित्यादिवाक्येन त्रिविधो ह्ययम् ॥
परिणामः समुद्दिष्टो, नोदिष्टा त्रिवृतः कृतिः ॥ ५२ ॥
ततोऽण्डसृष्टेः प्रागेव तेजोऽबन्नानि माधवः ॥
त्रिवृत्कृतानि संमेल्य महदादि सृजत्ययम् ॥ ५३ ॥
अथान्नमशितं पीतं जलं तेजोऽशितं तथा ॥
त्रिवृत्कृतं त्रिरूपं तत् कथमेकैकरूपकम् ॥ ५४ ॥
उच्यते व्यपदेशोऽतोऽयोग्य इत्यत उच्यते ॥
यस्यांशस्य हि वैशेष्यव्यपदेशस्तु तेन वै ॥ ५५ ॥
अन्ने भूम्यंशवैशेष्यादल्पत्वादितरस्य हि ॥
तस्मादेकैकरूपस्य व्यपदेशो न दूष्यते ॥ ५६ ॥
अध्यायस्य समाप्तिश्च द्विरुक्त्या परिद्योत्यते ॥

इति श्रीभाष्यवार्त्तिके द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥
समाप्तोऽयं द्वितीयोऽध्यायः ॥



गताध्यायद्वयेनैव गुणसागरसुन्दरम् ॥
निरस्तनिखिलापायं विश्वस्यैककारणम् ॥ १ ॥
विलक्षणामितोदारं ब्रह्मोपास्यं मुमुक्षिभिः ॥
वेदान्तवेद्यं स्मृत्यादिविरोधहृतिपूर्वकम् ॥ २ ॥
स्थापितं तस्य संप्राप्त्या अधुनोपाय ईर्य्यते ॥
तन्निमित्तं तृतीयस्य लक्षणस्य द्वयोत्तरम् ॥ ३ ॥
प्रारम्भावसरस्तत्र वैतृष्ण्यं प्राप्य वस्तुतः ॥
व्यतिरिक्ते तत्सिद्ध्यर्थं दोषा जीवे परे न च ॥ ४ ॥
किन्तु कल्याणगुणतो प्रथमे च द्वितीयके ॥
निरूप्यतेऽत्र जीवः किं गच्छन् देहान्तरादिषु ॥ ५ ॥
देहारम्भकसत्सूक्ष्मभूतैः संमिलितोऽथवा ॥
नेति तत्रेति संप्राप्ते मिलितस्तेन सर्पति ॥ ६ ॥
यत्र गच्छति तत्रापि भूतसूक्ष्माणि सन्त्यतः ॥
इति प्राप्ते सम्मिलितो भूतसूक्ष्मैर्हि गच्छति ॥ ७ ॥
यतः पञ्चाग्निविद्यायां प्रश्नोत्तरनिरूपणम् ॥
नराकारं परिणतमप्रूपं भूतमेव यत् ॥ ८ ॥
वक्तव्यस्तत्परिष्वङ्गो नाखिलैः सूक्ष्मभूतकैः ॥
इत्याशङ्क्य त्रिवृत्कृत्या सर्वेषामविशेषतः ॥ ९ ॥
आप इत्युपदेशस्तु भूयस्त्वाच्छ्रुतिसंमतः ॥
भूतसूक्ष्मपरिषङ्गः प्राणानुगतिवाक्यतः ॥ १० ॥
गृहित्वैतानि संयाति वायुर्गन्धानिवाऽऽशयी ॥
इति स्मृत्या भूतसूक्ष्मैर्मिलितः परिसर्पति ॥ ११ ॥
अग्न्यादिषु लयश्रुत्या प्राणादीनां मृतस्य तु ॥
न तैर्जीवे परिष्वङ्ग इति चेल्लयभाक् ततः ॥ १२ ॥
नापो होम्या इति न हि श्रद्धा एव च ताः स्मृताः ॥

पञ्चम्यामिति वाक्येन प्रश्नोत्तरविनिर्णयात् ॥ १३ ॥
कृत्स्नं कर्मफलं भुक्त्वा जीवो गच्छति नेति वा ॥
कृत्स्नभोगे नावशेषः कर्मणोऽस्तीति तत्कथम् ॥ १४ ॥
गच्छत्यनुशयी जीव इति प्राप्तेऽभिधीयते ॥
गच्छत्यनुशयी जीवः श्रुतिस्मृतिनिरूपणात् ॥ १५ ॥
कार्ष्णाजिनिराचार्य अचारेणोपलक्षितम् ॥
पापपुण्यात्मकं कर्म मन्यतेऽतो न तत्क्षतिः ॥ १६ ॥
तदपेक्षो हि सर्वेषामाचारः पुण्यकर्मणाम् ॥
दृश्यते स तु नान्येषामधिकारविवर्जनात् ॥ १७ ॥
चरतेः संप्रयोगाद्धि पुण्ये पापे च कर्मणि ॥
तस्मादाचारशब्देन बादरिर्मन्यते हि तत् ॥ १८ ॥
याचनामनुभूयैते ते वानिष्टादिकारिणः ॥
चन्द्रारोहावरोहौ च नान्यथेति विनिर्णयः ॥ १९ ॥
अत एव नारकान् सप्त रौरवादीन् स्मरन्ति हि ॥
विद्याया विरहत्वाद्धि मार्गोऽनिष्टादिकारिणाम् ॥ २० ॥
देवयानेन गमनं तथेष्टादेरभावतः ॥
पितृयानेन चन्द्रादौ गमनं नोपपद्यते ॥ २१ ॥
देहारम्भनिमित्तं हि पञ्चमाहुत्यपेक्षणम् ॥
न पापकर्मणि नरे भवतीत्युपलभ्यते ॥ २२ ॥
पञ्चमाहुत्यपेक्षा न केषाञ्चित् पुण्यकर्मणाम् ॥
देहारम्भनिमित्तं हि श्रूयेते द्रुपदात्मजौ ॥ २३ ॥
तथोद्भिज्जस्वेदजयोः पञ्चमाहुतिमन्तरा ॥
उत्पत्तिरिह तस्माद्धि नाहुतिर्नियताऽस्ति हि ॥ २४ ॥
अतश्चन्द्रमसोऽप्राप्तिः केवलं पापकर्मणाम् ॥
अवरोहप्रकारे च यदाकाशादिभाववाक् ॥ २५ ॥

साद्दश्यभावः स प्रोक्तो मानवापत्तिवन्न हि ॥
भोगाभावान्न नाकादिभावो मानुषभाववत् ॥ २६ ॥
आकाशभावप्राप्तेर्वै यावद् व्रीह्यादिभावता ॥
तावत्तत्र च नाकादौ चिरं तीष्ठति नेति वा ॥ २७ ॥
नियमे हेत्वभावाच्चानियम इति चेन्न हि ॥
यावद् व्रीह्यादिभावो वा तावन्नातिचिरस्थितिः ॥ २८ ॥
अचिरं निर्गतेर्यस्माज्जीवानां श्रवणाच्छ्रुतेः ॥
जीवाद् व्रीह्यादिभावेन जायन्त इति यच्छ्रुतम् ॥ २९ ॥
व्रीह्यादिभावो जीवानामिहाकाशादिभाववत् ॥
भोक्तृत्वाभावतो नैव किञ्चित् कर्माभिलप्यते ॥ ३० ॥
व्रीह्यादिभावो भोगार्थं जीवानां शब्दतो न च ॥
अतो व्रीह्यादिजन्माऽपि गौणमेव न संशयः ॥ ३१ ॥
रेतोभाव इवायं स्याद् भावो व्रीह्यादिकस्य च ॥
शरीरित्वं तु जीवानां योनिप्राप्तेरनन्तरम् ॥ ३२ ॥
सुखदुःखोपभोगस्य सद्भावादत एव हि ॥
प्राणाकाशादिसम्प्राप्तिर्योगमात्रं न संशयः ॥ ३३ ॥

इति श्रीभाष्यवार्तिके तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥

जाग्रतो जीववर्गस्य दुःखित्वं स्थापितं ततः ॥
स्वप्नस्थानपरीक्षाऽपि साम्प्रतं प्रवितन्यते ॥ १ ॥
न रथास्तत्र न रथयोगा इत्यादिवाक्यतः ॥
रथादिसृष्टिं किञ्जीवः करोतीश्वर एव वा ॥ २ ॥
युक्तं स्वप्ने जीव एव सृष्टेः कर्त्ता हि स्वप्नदृक् ॥
एकेऽत्र शाखिनो जीवं निर्मातारं वदन्ति हि ॥ ३ ॥
एवं प्राप्ते समाधानं मायामात्रेति सूत्रतः ॥
जनकस्य कुले जाता देवमायेव निर्मिता ॥ ४ ॥
इत्यादिवचनान्मायाशब्द आश्चर्यवाचकः ॥
अतो रथाद्यर्थजातं स्वप्नद्रष्ट्रैव दृश्यते ॥ ५ ॥
तत्कालमात्रसत्ताकं परमाश्चर्यरूपकम् ॥
करोति परमात्मैव सत्यसङ्कल्पतो हरिः ॥ ६ ॥
न तु जीवोऽनभिव्यक्तरूपत्वात् कृत्स्नतोऽपि हि ॥
सत्यसङ्कल्पयुक्तो हि संसारे तु तिरोहितः ॥ ७ ॥
तथाविधाश्चर्यरूपां सृष्टिं स्रष्टुमलं न हि ॥
स हि कर्त्तेति च वचः कर्त्तारं वदतीश्वरम् ॥ ८ ॥
जीवेऽपहतपाप्मत्वमीशसङ्कल्पतोऽधुना ॥
तिरोहितं ततो दृष्टावस्य बन्धविपर्ययौ ॥ ९ ॥
तिरोभावोऽपि जीवेऽयं देहयोगप्रभावतः ॥
सृष्टिकाले स्थूलदेहात् प्रलये सूक्ष्मदेहतः ॥ १० ॥
जीवसङ्कल्पतो नैव स्वाप्नार्थाः प्रभवन्ति हि ॥
यतस्तेषां सूचकत्वं शुभाशुभनिरूपितम् ॥ ११ ॥
श्रुतिराहेति नो जीवकृतं जीवेऽशुभावहम् ॥
नाड्यः पुरीतद् ब्रह्म च सुप्तजीवाश्रयत्रयम् ॥ १२ ॥
किं विकल्पो हि सर्वस्य वा सर्वत्र समुच्चयः ॥

# बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

---

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० १ ०

व्याकरणमिताक्षरा। श्रीमदन्नंभट्टप्रणीता खण्डानि ९ ९ ०

रसमञ्जरी। व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ ३ ०

भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २ २ ०

बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० १० ०

ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता खण्डे २ २ ०

दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३ ३ ०

श्रीमदणुभाष्यम्। श्रीश्रीवल्लभाचार्यविरचितम्। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्यव्याख्या समेतम् खण्डानि १० १० ०

तत्त्वशेखरः। श्रीभगवल्लोकाचार्यप्रणीतः। तथा–तत्त्वत्रयचुलुकसंग्रहः। कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः। १ ०

श्रीभाष्यवार्तिकम्। श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम्। १ ०

**ब्रजभूषण दास और कम्पनी**

**चांदनीचौक के उत्तर नई सड़क बनारस**




BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*No. 133.*

# श्रीभाष्यवार्तिकम् ।

श्रीमद्रामानुजाचार्यविशिष्टाद्वैत सिद्धान्तप्रतिपादनपरम् ।

यतीन्द्रमतदीपिका च ।

श्रीगोविन्दाचार्यसूनुश्रीनिवासाचार्यकृता ।

सकलाचार्यमतसंग्रहश्च ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा

रत्नगोपालभट्टेन संशोधितानि ।

# SRÎ BHÂSHYA VÂRTIKA,

A TREATISE ON VISISHTÂDVAITA PHILOSOPHY;

*Also* YATÎNDRA MAT DÎPIKÂ,

By Nivâsâ Chârya son of Govindâ Chârya,

*And* Sakalâchâryamat Sangrah.

EDITED BY RATNA GOPÂL BHATTA.

*Fasciculus II.*

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,
BENARES.
1907.

*Registered under Act XXV. of 1867.* ( ALL RIGHTS RESERVED. )

# सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ७ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ० |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

निरपेक्षत्वप्रतीतेरेकदाऽनेकसंस्थितेः ॥ १३ ॥
असम्भवाद् विकल्पः स्यादिति प्राप्ते समुच्चयः ॥
त्रिषु स्थानत्वसंश्रुत्या विकल्पः पाक्षिको न हि ॥ १४ ॥
कार्यभेदप्रभावाच्च भवत्येव समुच्चयः ॥
प्रासादखट्वापर्यङ्कवच्च कार्यं विभिद्यते ॥ १५ ॥
प्रासादखट्वास्थानीयौ तौ च नाडीपुरीततौ ॥
पर्यङ्करूपं ब्रह्मात्र स्वापस्थानं तदेव हि ॥ १६ ॥
सुप्तिस्थानं यतो ब्रह्म तस्मादेव प्रबुद्ध्यते ॥
जीववर्ग इति श्रुत्या सम्यगेव निरूप्यते ॥ १७ ॥
प्रबोधसमये सुप्तः स एवोत्तिष्ठतीतरः ॥
किं वेति संशये युक्तमुत्तिष्ठत्यन्य एव हि ॥ १८ ॥
सर्वोपाधिविनिर्मुक्तः सम्पन्नो ब्रह्मणीश्वरे ॥
देहाद्यभाववान् सुप्तः कथमुत्थातुमर्हत्यलम् ॥ १९ ॥
अतोऽन्य एवेति प्राप्ते सुप्त एवोत्थितो भवेत् ॥
कृतस्य पुण्यपापादेर्भोगसम्बन्धसम्भवात् ॥ २० ॥
सुप्तोऽभूद् यः स एवायं प्रबुद्धोऽस्मीत्यनुस्मृतेः ॥
सुप्तस्य मुक्तरूपत्वे मोक्षार्था विध्योऽफलाः ॥ २१ ॥
भवेयुरत एवायं सुप्तः स्वोपाधिमिश्रितः ॥
परन्तूपात्तकरणो ज्ञानभोगाद्यशक्तिमान् ॥ २२ ॥
विश्रमस्थानमासाद्य पुनर्भोगार्थमुत्थितः ॥
सर्वप्राणादिसम्बन्धोपरतिर्मरणं तु तत् ॥ २३ ॥
मूर्च्छा च सूक्ष्मप्राणादिसम्बन्धावस्थितिर्मता ॥
वैराग्यार्थं दोषरूपा जीवावस्था निरूपिताः ॥ २४ ॥
अतोऽधुना परेशस्य निर्दोषत्वं निरूप्यते ॥
जागरादिस्थिते जीवे ये दोषास्तेऽन्तरात्मनि ॥ २५ ॥

सन्तीति तस्यावस्थानशरीरस्थितिसम्भवात् ॥
इति प्राप्ते स्थानतोऽपि न दोषः परमेश्वरे ॥ २६ ॥
सम्भवेद् यत उक्तो हि निर्दोषगुणसागरः ॥
श्रुतिस्मृतिभ्यां भगवान् शुद्धः सर्वत्र रूपितः ॥ २७ ॥
देवादिदेहसंयोगरूपावस्थाद्यभेदतः ॥
ईशोऽपुरुषार्थभोगोऽवर्जनीयो न हीति चेत् ॥ २८ ॥
अन्तर्यामिण ईशस्याऽमृतत्वस्योपदेशतः ॥
स्वेच्छानियमनं तत्र कुर्वतः परमेशितुः ॥ २९ ॥
तत्सम्बन्धप्रयुक्तोऽतोऽपुरुषार्थो निषिद्ध्यते ॥
जीवस्य कर्मवश्यत्वात् कर्मानुगुणवस्तुभिः ॥ ३० ॥
सम्बन्ध एव भोगार्थः स्यात् परस्य तथा न हि ॥
स्वाधीनत्वाद्धि सम्बन्धसत्त्वेऽपि न च दूषणम् ॥ ३१ ॥
किन्तु जगन्नियमनं लीलारसपराप्तये ॥
स सम्बन्धः परेशस्य सर्वैः स्वकृतवस्तुभिः ॥ ३२ ॥
एकस्मिन् देहसंयोगे द्वा सुपर्णेति वाक्यतः ॥
जीवस्य भोगसम्बन्धः परस्यैश्वर्यतो न च ॥ ३३ ॥
देवादिदेहे सत्त्वेऽपि शरीरित्वनिबन्धनम् ॥
जीवतत्कर्मवश्यत्वमस्येशस्य न विद्यते ॥ ३४ ॥
नामादिकार्यास्पर्शेऽपि निर्वोढा नामरूपयोः ॥
श्रुत्योच्यते परेशोऽत्र निर्वोढृत्वस्वभावतः ॥ ३५ ॥
नन्वेवं तच्छरीरत्वात् तदन्तर्यामिणः कथम् ॥
रूपसम्बन्धराहित्यतुल्यत्वमितिचेच्छृणु ॥ ३६ ॥
तज्जन्यसुखदुःखादिभोक्तृत्वेनापरात्मनः ॥
तत्तद्रूपादिसम्बन्धस्तद्धानेः परमात्मनः ॥ ३७ ॥
रूपसम्बन्धरहिततुल्यत्वं स्यान्न संशयः ॥

विधिनिषेधशास्त्राणि कर्मवश्यान्नरानिह ॥ ३८ ॥
अधिकुर्वन्ति तस्माद्धि परेशेऽरूपतुल्यता ॥
अन्तर्यामिस्वरूपेणाऽवस्थितोऽपि परेश्वरः ॥ ३९ ॥
निरस्ताखिलदोषो हि कल्याणगुणसागरः ॥
सत्यादिवाक्यावैयर्थ्यात् स्वप्रकाशो यथेश्वरः ॥ ४० ॥
तथैव सत्यसङ्कल्पः सत्यसङ्कल्पवाक्यतः ॥
अस्ताविद्यादिदोषश्च भवेदुभयलिङ्गवान् ॥ ४१ ॥
सन्दर्शयन्ति वेदान्ता ईश्वराणां परेश्वम ॥
न चास्य कश्चिज्जनिता तथैवाऽस्य न चाधिपः ॥ ४२ ॥
न कार्यं कारणं तस्य, न समो, नाधिकोऽपि हि ॥
बलज्ञानक्रियाशक्तिस्तस्य स्वाभाविकी सदा ॥ ४३ ॥
इति श्रुत्यनुसारेण सगुणं दोषवर्जितम् ॥
सर्वज्ञः सर्वविद्यश्च यस्य ज्ञानमयं तपः ॥ ४४ ॥
वातोऽस्मात् पवते भीषा भीषैवोदेति वै रविः ॥
स एको ब्रह्मणः प्रोक्त आनन्दस्तं विजानतः ॥ ४५ ॥
कुतश्चन भयं तस्य न भवेद् भवसागरे ॥
निवर्त्तन्ते यतो वाचो मनसा ब्रह्मणः सह ॥ ४६ ॥
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ॥
इत्यादिवचसा सर्वावस्थायां संस्थितस्य हि ॥ ४७ ॥
लिङ्गद्वयसमावेशात् स्थानदोषाः स्पृशन्ति न ॥
यतो नानाविधस्थाने स्थितस्यापि परात्मनः ॥ ४८ ॥
न दोषभाक्त्वं तस्माद्धि प्रतिबिम्बोपमो हरिः ॥
ननु—
सूर्यादिप्रतिबिम्बो हि भ्रान्त्योपाधिषु गृह्यते ॥ ४९ ॥
तत्प्रयुक्ता अतो दोषाः प्रतिबिम्बे न तात्त्विकाः ॥

पृथिव्यामिति वाक्येन स्वाधारे तत्त्वतः स्थितिः ॥ ५० ॥
तत्प्रयुक्तास्तु ये दोषास्ततस्ते स्युः परात्मनः ॥
इति प्राप्ते समाधानं दृष्टान्तद्वयसम्भवात् ॥ ५१ ॥
घटादिषु यथाकाशं न घटादिस्थधर्मवत् ॥
अम्बुनिष्ठोऽशुमान् वापि नाम्बुह्रासादिधर्मवान् ॥ ५२ ॥
तथेशोऽस्ति पृथिव्यादौ न पृथिव्यादिधर्मवान् ॥
ननु—
द्वे वै वा ब्रह्मणो रूपे मूर्त्तामूर्त्तप्रभेदः ॥ ५३ ॥
इति प्रकृत्य स्थूलं च सूक्ष्मं चात्राखिलं जगत् ॥
पुरुषस्य यथा वासो महारजनमित्यतः ॥ ५४ ॥
आकारमभिधायाथ नेति नेतीत्यनेन हि ॥
प्रकारमितिशब्देन परामृश्य निषिद्ध्य च ॥ ५५ ॥
सन्मात्रमेव ब्रह्मात्र दर्शितं गुणवत् कथम् ॥
कथञ्च दोषरहितमित्यत्रोत्तरमुच्यते ॥ ५६ ॥
नैतद् युक्तं ब्रह्मणो ये विशेषाः प्रतिपादिताः ॥
नेति नेतीति तानेव प्रतिषिद्ध्यति नो वचः ॥ ५७ ॥
तावन्मात्रप्रकारं न, ततोऽप्यस्त्यधिकं परम् ॥
तावत्त्वप्रतिषेधाद्धि ततोऽधिकनिरूपणात् ॥ ५८ ॥
निर्दोषं गुणवद् ब्रह्म निर्णीतं नेति वाक्यतः ॥
प्रमाणान्तरतो ब्रह्म कस्यापि व्यज्यते न हि ॥ ५९ ॥
न चक्षुषा नापि वाचा गृह्यते चेति शास्त्रतः ॥
किन्तु संराधनेनैव प्रसादाद् दृश्यते जनैः ॥ ६० ॥
नायमात्मेति संश्रुत्या नाहमित्यादिसंस्मृतेः ॥
साक्षात्कृतब्रह्मरूपा वामदेवादयस्तु ये ॥ ६१ ॥
तेषां प्रकाशते यादृग् ज्ञानानन्दादिरूपवत् ॥

मूर्त्तामूर्त्ताखिलजगद्वैशिष्ट्यगुणवत्तथा ॥ ६२ ॥
सम्यगाराधानात् तेषां विश्ववैशिष्ट्यसद्गुणः ॥
प्रतीयते विशेषेणाऽनन्तकल्याणसद्गुणः ॥ ६३ ॥
तदुक्तहेतुभिर्ब्रह्म निर्दोषं गुणसागरम् ॥
उभयव्यपदेशोऽत्र त्वहिकुण्डलवद्धरौ ॥ ६४ ॥
अभेदव्यपदेशो हि सूक्ष्मचिदचिद्वस्तुना ॥
तत्स्थूलावस्थयाचापि ब्रह्मणस्तद्विचार्यते ॥ ६५ ॥
अहिकुण्डलवत् किं वा विशेषणविशेष्यतः ॥
अंशांशिभावमादाय युक्तं त्विदं निरूपितम् ॥ ६६ ॥
आरम्भणाधिकरणे सूक्ष्मात् स्थूलजनिर्मता ॥
अहिकुण्डलवच्चात्र व्यपदेशद्वयं घटेत् ॥ ६७ ॥
इदं सर्वं हि ब्रह्मैव तथैवात्मेति वाक्यतः ॥
तादात्म्यव्यपदेशोऽत्र तथा हंतेति च श्रुतेः ॥ ६८ ॥
भेदस्य व्यपदेशोऽपि रज्जुसर्प इवोच्यते ॥
अचिद्वस्तुनि संस्थानविशेषा ब्रह्मणस्ततः ॥ ६९ ॥
ब्रह्मणोऽचित्स्वरूपेणाऽवस्थाने श्रुतयोऽखिलाः ॥
आत्मनोऽपरिणामित्ववादिन्योऽभेदबोधिकाः ॥ ७० ॥
बाधिताः सम्भवेयुस्ता ह्यत एवं विनिर्णयः ॥
प्रभाप्रभावतोरत्र तेजस्त्वेनाविभिन्नयोः ॥ ७१ ॥
तादात्म्यवत् प्रपञ्चस्य ब्रह्मरूपत्वमुच्यते ॥
जीववच्चापृथक्सिद्धविशेषणतया चितः ॥ ७२ ॥
ब्रह्मांशत्वं तद्विशिष्टब्रह्मवस्त्वेकदेशता ॥
तया मुख्योऽचितः प्रोक्तो व्यवहारो विवेकिनाम् ॥ ७३ ॥
स्वरूपभेदेनाप्यत्र विशेषणविशेष्ययोः ॥
मुख्यः स्याद् व्यवहारो हि रक्षिताऽदोषता हरौ ॥ ७४ ॥

जातेर्गुणस्य देहस्य प्रकाशस्य यथैव च ॥
व्यक्तिगुण्यात्मप्राणिषु ह्यपृथक्सिद्धिलक्षणम् ॥ ७५ ॥
विशेषणत्वमंशत्वं तथा जीवाचितोरिह ॥
महानजर आत्मेति श्रुतिवाक्यात् परात्मनि ॥ ७६ ॥
अचिद्धर्मनिषेधाद्वा अंशांशिभाव इत्यपि ॥
विशेषणविशेष्यत्वेनैवेति हि विनिर्णयः ॥ ७७ ॥
सूक्ष्मचिदचिद्विशिष्टं कारणं ब्रह्म कीर्त्तितम् ॥
स्थूलचिदचिद्विशिष्टं कार्यभूतं तदेव च ॥ ७८ ॥
कारणात् कार्यभूतस्यानन्यत्वं कारणात्मनः ॥
ज्ञानतः कार्यभूतस्य विज्ञानमुपपद्यते ॥ ७९ ॥
जगन्निमित्तोपादानब्रह्मणः परमस्ति हि ॥
तत्त्वमाशङ्क्य चाभासैः सांप्रतं प्रतिषिद्ध्यते ॥ ८० ॥
सेतूपदेशतस्तस्मात् परमस्तीति मा वद ॥
चिदचिद्वस्तुमात्रं तत् स्वस्मिन् सर्वं प्रतिष्ठितम् ॥ ८१ ॥
असंकीर्णं सेतुपदात् स्फुटमेवं निरूप्यते ॥
चतुष्पात् षोडकलं ब्रह्मेति परिपठ्यते ॥ ८२ ॥
तथैव विश्वाभूतानि पादोऽस्य व्यपदिश्यते ॥
उपासनार्थो विज्ञेयः सत्यमित्यादिवाक्यतः ॥ ८३ ॥
अपरिच्छिन्नरूपस्य चोन्मितत्वं स्वतो न हि ॥
व्यापकस्य प्रकाशादेर्वातायनसमाश्रयात् ॥ ८४ ॥
परिच्छिन्नत्वमिव हि स्थानोपाधिसमाश्रयात् ॥
वागादिपादसंदेश उपासनफलाय हि ॥ ८५ ॥
प्राप्यप्रापकसंबन्धव्यपदेशात् प्रापकात् परं ॥
प्राप्यमस्तीति नो युक्तं प्रापकः प्राप्यते यतः ॥ ८६ ॥
परमेश्वरस्य स्वप्राप्तौ स्वस्यैवोपायताऽप्यतः ॥

नायमात्मेति वचनादनन्योपायताश्रुतेः ॥ ८७ ॥
ततो यदुत्तरतरमक्षरात् परत परः ॥
इत्यादिभेदसंदेशात् परमस्तीति चेन्न हि ॥ ८८ ॥
यस्मात् परमिति श्रुत्या ततोऽन्यस्य निषेधतः ॥
अव्याकृताऽक्षराद् यस्मात् समष्टिपुरुषः परः ॥ ८९ ॥
तस्मात् परो यः सर्वज्ञः स इहापि परात्परः ॥
तदेव परमं पूर्णं सर्वस्माद् ब्रह्म तत्परम् ॥ ९० ॥
सर्वशक्तिर्महोदारो यागदानादिसेवनैः ॥
ऐहिकामुष्मिकं भोगजातं स्वप्राप्तिरूपिणम् ॥ ९१ ॥
अपवर्गं ददातीष्टं न तु कर्मक्षणान्वयि ॥
कालान्तरीयफलदं तस्मादीशात् फलं भवेत् ॥ ९२ ॥
ननु स्यात् कर्मफलदं न साक्षात् किन्त्वपूर्वतः ॥
आचार्यो जैमिनिः प्राह न त्वेवं बादरायणः ॥ ९३ ॥
तन्मते परमेशानात् फलं सर्वं प्रजायते ॥
अग्निवाय्वाद्यात्मतया परमेश्वर एव हि ॥ ९४ ॥
फलप्रदः समाराध्य इति वै बादरायणः ॥
ब्रवीति गीताप्रमाण्यात् फलमात्रं परेश्वरात् ॥ ९५ ॥

इति श्रीभाष्यवार्त्तिके तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

उपासकाय निर्णीता ब्रह्मणः फलदायिता ॥
गुणानामुपसंहारनिर्णयाय विचिन्त्यते ॥ १ ॥
विद्याभेदस्तत्र तावच्छाखाभेदाद् विभिद्यते ॥
वैश्वानरीयविद्या किं विद्यैक्यमुत तद् भवेत् ॥ २ ॥
पुनः श्रुतेः प्रकरणस्य भेदकत्वाच्च भिद्यते ॥
शिरोव्रतं हि विद्याङ्गमन्येषां शाखिनामपि ॥ ३ ॥
व्रतोपदेशनियमो विद्यैक्ये तु न संघटेत् ॥
विद्याभेद इति प्राप्ते सर्ववेदान्तप्रत्ययम् ॥ ४ ॥
एकं ह्युपासनमिति नोदनाद्यविशेषतः ॥
उपासीत तथा विद्यादित्येवं धातुबोधितः ॥ ५ ॥
अर्थरूपविशेषोऽयं विधिः स्याच्चोदनापदात् ॥
अविशेषश्रुतेर्भेदः प्रकारान्तरतोऽस्ति चेत् ॥ ६ ॥
विद्यायां प्रतिपत्तॄणां भेदाच्च घटते द्वयम् ॥
तस्माद्विद्यैक्यमेवास्ति न तु भेदः कथञ्चन ॥ ७ ॥
उपासनस्य श्रुत्यैव सर्ववेदान्तबोध्यता ॥
प्रदर्शिता ह्येकवाक्याच्छान्दोग्ये तैत्तरीयके ॥ ८ ॥
एवं सर्वत्र वेदान्ते समाने सत्युपासने ॥
वेदान्तान्तरबोध्यानां गुणानामुपसंहृतिः ॥ ९ ॥
कर्तव्याऽन्यत्र वेदान्ते तस्माद्विद्यैक्यमुच्यते ॥
यथैकस्मिन् हि वेदान्ते विधिशेषश्रुतो गुणः ॥ १० ॥
तद्विद्यायास्तु संबन्धात् तत्फलार्थं प्रवर्तनम् ॥
तथा विद्यान्तरोक्तोऽपि विद्यासंबन्धतोऽत्र हि ॥ ११ ॥
उपसंहारः कर्त्तव्यस्तस्माद्विद्यैक्यमस्त्वलम् ॥
ब्रह्मरूपगुणानां हि सर्वविद्यासु सांप्रतम् ॥ १२ ॥
चिन्त्यते परविद्यासु संहृतिर्नास्ति वाऽस्ति किम् ॥

उपसंहारो नास्त्येव प्रकरणप्रभेदतः ॥ १३ ॥
एवं प्राप्ते प्रधानस्य गुणिनो ब्रह्मणश्च हि ॥
सर्वेषूपासनेष्वत्र भेदाभावान्न संशयः ॥ १४ ॥
गुणानामुपसंहारः कर्त्तव्यः प्रत्युपासनम् ॥
गुणिनो ह्यपृथग्भावादेवानन्दादयो गुणाः ॥ १५ ॥
यथा ब्रह्मप्रधानस्य तथैव स्यात् प्रियं शिरः ॥
सर्वत्र ते प्रसज्येरन् ये श्रुता ब्रह्मणो गुणाः ॥ १६ ॥
प्रियशिरःप्रभृतयो न त्वेवं रूपणादिह ॥
अन्यथा पक्षपुच्छादिपरावयवभेदतः ॥ १७ ॥
सम्यक् स्यातामुपचयापचयौ परमात्मनः ॥
सत्यं ज्ञानमनन्तञ्च ब्रह्मेति हि विरुद्ध्यते ॥ १८ ॥
गाम्भीर्यैश्वर्यकारुण्यगुणा न गुणिनः पृथक् ॥
उपसंहृतिर्यदा तेषां तदा सर्वत्र सम्भवः ॥ १९ ॥
आनन्त्यादुपसंहारासामर्थ्यस्यापि सम्भवः ॥
इत्याशङ्क्य त्वर्थसाम्यादानन्दाद्युपसंहृतिः ॥ २० ॥
सर्वत्रैवोपसंहारो विद्यासु परिपठ्यते ॥
तेषां गुणानां ये वै स्युर्ब्रह्मरूपनिरूपकाः ॥ २१ ॥
निरूपितस्य ये च स्युर्गाम्भीर्यादिगुणास्तथा ॥
यत्रोक्तास्ते तु तत्रैव न तु सर्वत्र सम्मताः ॥ २२ ॥
प्रियशिरःप्रभृतिभिः पुरुषाकाररूपणम् ॥
अन्यथोपचयादिः स्यात् परमात्मनि एव ते ॥ २३ ॥
उपासनार्थमेतस्य रूपकेण निरूपणात् ॥
प्रियमोदादिरूपैर्हि शिरःप्रभृतिभिः परः ॥ २४ ॥
सुखेन प्रतिपद्येत तस्माद्रूपकरूपणम् ॥
आत्मशब्दोऽपि तत्रैव परमात्मनि युज्यते ॥ २५ ॥

तस्यैव सुखसम्प्राप्त्यै शिरआदिनिरूपणम् ॥
नचानात्मस्वात्मशब्दप्रयोगान्निर्णयः कथम् ॥ ५६ ॥
परमात्मन एव स्यादानन्दमयरूपिणः ॥
आनन्दमयोऽन्योऽयमन्तरात्मेति हि श्रुतौ ॥ २७ ॥
आत्मशब्देन ग्रहणं परमात्मन एव यत् ॥
ततो निर्णय एव स्यात् परमानन्दरूपिणः ॥ २८ ॥
यथात्मा वेति वाक्येऽत्र परात्मग्रहणं तथा ॥
सोऽकामयतवाक्याद्वा उत्तरादिति निर्णयात् ॥ २६ ॥
सर्वत्र सत्यसङ्कल्पगुणैक्यान्न च भिद्यते ॥
विद्येति सर्वं वेदान्त इत्थं निर्णय उच्यते ॥ ३० ॥
गुणानामुपसंहारः क्वचिन्नास्ति विशेषतः ॥
उपास्यरूपसम्भेदादिति निर्णय ईरितः ॥ ३१ ॥
उत्क्रान्तिकाल एवास्य सर्वकर्मक्षयो भवेत् ॥
आविर्भूतस्वरूपस्य सकलक्षीणकर्मणः ॥ ३२ ॥
सूक्ष्मदेहेन युक्तस्य देवयानपथा गतिः ॥
नच सूक्ष्मशरीरस्य कर्मनाशे कथं स्थितिः ॥ ३३ ॥
इति वाच्यं यतो विद्यामाहात्म्यादिति निर्णयात् ॥
स्वयं सूक्ष्मशरीरस्य विद्याऽनारम्भिकास्त्वपि ॥ ३४ ॥
ब्रह्मप्राप्तिप्रदानाय मुक्तानापयितुं परम् ॥
देवयानपथा सूक्ष्मशरीरं स्थापयेत् परम् ॥ ३५ ॥
केवलं स्थूलदेहस्य कर्मनाशात् परिक्षयः ॥
अर्द्धं सूक्ष्मशरीरं तु गत्यर्थमनुवर्तते ॥ ३६ ॥
ननु—
वशिष्ठविश्वामित्रादिकृतसाक्षात्परात्मना ॥
देहपातोत्तरं चापि देहान्तरसुसङ्गमः ॥ ३७ ॥

तन्निमित्तं सुखं दुःखं पुत्रजन्म विपश्चितः ॥
अत्रोत्तरं ज्ञानिनां वै कर्मणां क्षयमात्रतः ॥ ३८ ॥
अर्चिरादिगतिप्राप्तिर्वशिष्ठादेस्तु नो तथा ॥
अधिकारसमाप्तौ हि प्रारब्धक्षयभोगतः ॥ ३९ ॥
स्वाधिकारप्रपर्यन्तं प्रारब्धं नैव हीयते ॥
अतस्तेषां स्वदेहानां पातोत्तरपरा गतिः ॥ ४० ॥
साधारणीयं सर्वासु विद्यासु परमा गतिः ॥
उपकोसलविद्यासु प्राप्तैवानूद्यतेतराम् ॥ ४१ ॥
अस्थूलत्वादिबुद्धीनां सर्वविद्यासु संग्रहः ॥
कर्त्तव्योऽक्षरब्रह्मात्मसम्बन्धित्वेन संश्रुतेः ॥ ४२ ॥
स्वेतरस्माद्धि व्यावृत्तं ब्रह्म यद्गुणमन्तरा ॥
तद्गुणानां तु सर्वासु विद्यास्वेव प्रसंग्रहः ॥ ४३ ॥
अस्थूलत्वादयस्तेषां, न तु गन्धरसादयः ॥
एकरूपार्थविषयं यत्र प्रश्नोत्तरद्वयम् ॥ ४४ ॥
विद्याभेदो न तत्र स्यात् कथञ्चिदपि हि श्रुतौ ॥
ये त्वत्र जीवपरयोर्योऽसौ सोऽहमिति श्रुतिः ॥ ४५ ॥
व्यतिहारानुसन्धानं वदतीति वदन्ति यत् ॥
न तद् युक्तं यतोऽन्यत्र सिद्धत्वाद् विध्यसम्भवात् ॥ ४६ ॥
येषां श्रुत्योपदेशोऽत्र मोक्षार्थोपासनाय हि ॥
उपसंहारस्तु सर्वत्र तद्गुणानां भवेत् परम् ॥ ४७ ॥
स एष नेति नेतीति प्रपञ्चं प्रतिपाद्य च ॥
ततो विलक्षणं ब्रह्म श्रुत्याऽसङ्गं निरूपितम् ॥ ४८ ॥
मुक्तस्य सर्वलोकेषु कामचारफलाय हि ॥
उपहार्या गुणाः सर्वे सत्यकामत्वमुख्यकाः ॥ ४९ ॥
दहराऽऽकाशे हि गुणिनि विपाप्मत्वादयो गुणाः ॥

तद्विशिष्टस्वरूपं यद् गुणार्थं चिन्तयेत् सकृत् ॥ ५० ॥
गुणिमात्रानुसन्धानं पूर्वं विहितमप्युत ॥
गुणयुक्तानुसन्ध्यर्थमावृत्तिस्तदनन्तरम् ॥ ५१ ॥
ब्रह्माक्षरं परं ज्योतिः शब्दैर्निर्दिष्टमेव यत् ॥
उपास्यं शब्दैरनूद्य तैरेव परमात्मनः ॥ ५२ ॥
तस्य नारायणत्वं हि सर्वथैव विधीयते ॥
अस्य मोक्षदशायां हि यादृशं परमात्मनः ॥ ५२ ॥
उपासनायां तस्यात्र तादृग् रूपं विचिन्तयेत् ॥
ब्रह्मप्राप्तिफलानां हि विद्यानां न विकल्पना ॥ ५३ ॥
समुच्चयः किन्तु भवेद् भूयस्त्वापेक्षया फले ॥
इति प्राप्ते विकल्पो हि भूयान्न तु समुच्चयः ॥ ५४ ॥
सर्वासामत्र विद्यानामविशिष्टफलत्वतः ॥

इति श्रीभाष्यवार्तिके तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥



गुणानामुपसंहारानुपसंहारनिर्णयः ॥
तद्विद्यैकत्वनानात्वकृता चिन्ताऽऽदिमेऽधुना ॥ १ ॥
विद्यातः पुरुषार्थोऽयमुत विद्याङ्गकर्मणः ॥
किं युक्तं पुरुषार्थो हि मन्यते बादरायणः ॥ २ ॥
विद्यातोऽत्र कुतः शब्दात् तमेवेत्यादिकादपि ॥
पूर्वपक्षी शङ्कतेऽत्र तमेवेत्यादिकं वचः ॥ ३ ॥
कर्तृभूतस्यात्मनो वै याथात्म्यावेदनार्थकम् ॥
कर्तृसंस्कारद्वारेण क्रत्वङ्गत्वात् फलश्रुतिः ॥ ४ ॥
अर्थवादो जैमिनिराचार्य इति मन्यते ॥
सिद्धान्ती त्वाह विद्यातः फलं स्याद् बादरायणः ॥ ५ ॥
निर्दोषाधिककल्याणगुणेशस्योपदेशतः ॥
उक्तं तु यद् ब्रह्मविदां कर्मानुष्ठानदर्शनात् ॥ ६ ॥
विद्या कर्माङ्गमित्येवं तन्न युक्तं भवेदिह ॥
कर्माकर्तुरपि च यद् विद्यया दृश्यते फलम् ॥ ७ ॥
दृश्यते हि ब्रह्मविदां कर्मत्यागेऽपि तत्फलम् ॥
फलाभिसन्धिरहितं कर्म यज्ञादिकं तु यत् ॥ ८ ॥
अनुष्ठीयते तद्विदा ततो विद्याङ्गमिष्यते ॥
मोक्षफलब्रह्मविद्याविरोधित्वात् कर्मणोऽङ्गता ॥ ९ ॥
न युक्ता फलभेदाद्धि विद्यायाः कर्मणोऽपि च ॥
यदेवेति वचस्त्वत्र न विद्याविषयेऽखिले ॥ १० ॥
उद्गीथविद्याविषये कर्मानुष्ठानदर्शनात् ॥
कुर्वन्नेवेति हि वचो विद्यामाहात्म्यबोधकम् ॥ ११ ॥
विद्यावता कर्म कृतं न वैतस्यास्ति लेपकम् ॥
न तु विद्यावतोऽवश्यं कर्मानुष्ठानसंमतिः ॥ १२ ॥
तस्माद् विद्या न कर्माङ्गमित्येवं बादरायणः ॥

यावज्जीवमग्निहोत्रं जुहोतीति वचोऽस्ति तत् ॥ १३ ॥
अविरक्तस्य विषयं न विरक्ते प्रवर्तते ॥
आश्रमा नैव सन्त्यत्र जैमिनेरूर्ध्वरेतसः ॥ १४ ॥
आश्रमान्तरमस्तीति बादरायणसंमतेः ॥
तस्मादिहोर्ध्वरेतस्सु ब्रह्मविद्याविधानतः ॥ १५ ॥
विद्यातः पुरुषार्थः स्यादितिसिद्धं विनिर्णयात् ॥
अतः क्रतोर्वीर्यवत्त्वफलसिद्ध्यर्थमेव हि ॥ १६ ॥
उद्गीथादौ रसतमदृष्टेर्विधिरिहोच्यते ॥
उपासीतेत्यादिशब्दाद्विध्यर्थत्वं युनक्ति ह ॥ १७ ॥
आख्यानश्रुतयः सर्वा वेदान्तेषु समास्थिताः ॥
विद्याविध्यर्थकास्तास्तु न तु पारिप्लवार्थकाः ॥ १८ ॥
कर्मवत्सु गृहस्थेषु नित्यनैमित्तिकं तु यत् ॥
तत्सर्वकर्मापेक्षेयं विद्येत्येवं विनिश्चयः ॥ १९ ॥
स्वस्य परिकराऽपेक्षो यथाश्वो गतिसाधनम् ॥
मोक्षसाधनविद्या वै तथा नित्याद्यपेक्षिणी ॥ २० ॥
यद्यप्यत्र गृहस्थो हि प्रवृत्तः स्वीयकर्मसु ॥
तथापि विद्वान् संयुक्तः स शमादिभिरन्वहम् ॥ २१ ॥
कुतो यतोऽत्र विद्याङ्गतया तेषां विधेयता ॥
निष्पत्त्यर्थं हि विद्यायाः प्राणानां रक्षणाय तु ॥ २२ ॥
सर्वाभ्यनुज्ञा भक्षादौ विदुषां नैव दोषभाग् ॥
परं त्वापद्विषयणी सर्वानुमितिरेव हि ॥ २३ ॥
अन्तरा वर्तमानानामनाश्रमवतां पुनः ॥
विद्यायामधिकारोऽस्ति दर्शनाद् रैक्कादिषु ॥ २४ ॥
आपद्विषयमेवेदं यदनाश्रमितादिकम् ॥
आश्रमित्वं तु शक्तस्य सर्वथैवास्ति बोधितम् ॥ २५ ॥

वैखानसनैष्ठिकादिस्वाश्रमे रहितास्तु ये ॥
नाधिकारोऽस्ति विद्यायां तेषामत्रेति निर्णयः ॥ २६ ॥
प्रायश्चित्तानन्तरं हि तेषां नैवाधिकारिता ॥
यजमानकर्तृकं चात्र ह्युद्गीथोपासनादिकम् ॥ २७ ॥
फलसंश्रवणादेवमात्रेयस्य मते भवेत् ॥
औडुलोमिमते त्वेतद् ऋत्विक्कर्तृकमिष्यते ॥ २८ ॥
बालस्वभावाप्राकट्यसाधनं कर्म यद् भवेत् ॥
तदुपाददानो विद्वान् अन्वयात् तस्य वै विधौ ॥ २६ ॥
विद्याविरोधिताश्रुत्या हीतरेषां विकर्मणाम् ॥
यन्मुक्तिफलविद्यायाः साधनं कर्म तद् भवेत् ॥ ३० ॥
प्रबलं सर्वकर्मभ्यो विद्वान् सम्यक् समाचरेत् ॥

इति श्रीभाष्यवार्तिके तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

साधनैः सह विद्यायाश्चिन्तनं तृतीये कृतम् ॥
विद्यास्वरूपमधुना विशोधनसुपूर्वकम् ॥ १ ॥
तत्फलं चिन्त्यतेऽध्याये तुरीये मुक्तिलक्षणम् ॥
ब्रह्मवित् परमाप्नोति विदित्वा च तमेव ह ॥ २ ॥
ब्रह्मैव भवति ब्रह्म यो वेद दहरे स्वयम् ॥
यः पश्यः पश्यते रुक्मवर्णमित्यादिवाक्यतः ॥ ३ ॥
साधनत्वेन विहितं ब्रह्मप्राप्तौ प्रवेदनम् ॥
सकृत् कृतं तच्छास्त्रार्थः किं वाऽत्र सकृदावृतम् ॥ ४ ॥
इत्येवं संशये युक्तं सकृत् कृतमिदं कुतः ॥
यतो वेदनमात्रस्य विधानात्सन्ततावृतौ ॥ ५ ॥
प्रमाणविरहाच्चापि दृष्टोपायत्वहानितः ॥
वेदनस्य परेशीयपराराधनरूपिणः ॥ ६ ॥
आराधितपरेशाच्च पुरुषार्थो भवेदिति ॥
ज्योतिःष्टोमादिवदिह शास्त्रार्थः स्यात् सकृत् कृतम् ॥ ७ ॥
इति प्राप्ते ह्यसकृद् वेदनावृत्तिरिष्यते ॥
ध्यानोपासनरूपस्य वेदनस्योपदेशतः ॥ ८ ॥
विद्युपास्तिध्यायतीनामेकत्र विषये यतः ॥
उपदेशार्थवाक्येषु प्रयोगादेव गम्यते ॥ ९ ॥
रैक्वज्ञानं विदिनोक्तमनुमेत्यादिवाक्यतः ॥
उपासिनोपसंहृत्य तद्वेदनमुपासना ॥ १० ॥
आत्मनोऽन्यतयोपास्यं ब्रह्म चात्मतया किमु ॥
आत्मतोऽन्यतयोपास्यं ब्रह्मेति घटते यतः ॥ ११ ॥
उपासितुर्यतो भिन्नः प्रत्यगात्मेति रूपितम् ॥
अधिकं भेदनिर्देशान्नेतरेत्यादिसूत्रतः ॥ १२ ॥
यथावस्थितमेवात्र समुपास्यं तु नान्यथा ॥

तथात्वे ब्रह्मसम्प्राप्तेरयथावस्थता भवेत् ॥ १३ ॥
इति प्राप्ते समाधानं शरीरस्य यथा स्वयम् ॥
आत्मा तथा परब्रह्मस्वात्मेति समुपास्यताम् ॥ १४ ॥
आत्मेत्येवेश्वरोपासां ग्राहयन्त्यखिला गिरः ॥
आत्मनोऽन्यत्र यो वेद तं परादादितीरणम् ॥ १५ ॥
आत्मत्वाननुसन्धानं कर्त्तारं प्रतिषेधति ॥
पृथगात्मानुसन्धानं पृथगात्मेति वाक्यतः ॥ १६ ॥
विधीयते विरोधोऽत्र नैवास्ति श्रौतसन्मते ॥
अब्रह्मणि ब्रह्मदृष्टिः प्रतीकोपासनं हि तत् ॥ १७ ॥
तत्रोपास्यं प्रतीकं हि नात्मोपासितुरस्य वै ॥
मनःप्रभृतिषु ब्रह्मदृष्टिरेव हि युज्यते ॥ १८ ॥
न ब्रह्मणि मनआदिदृष्टिस्तेभ्योऽधिकं तु तत् ॥
प्रभौ यस्माद् भृत्यदृष्टेः कर्तुर्दण्डोऽधिको भवेत् ॥ १९ ॥
भृत्यवर्गे राजदृष्टिः कृताभ्युदयकारिणी ॥
यावन्मरणमावृत्त्यास मुपास्यो हरि परः ॥ २० ॥
आवर्तयन् ब्रह्मलोकं गच्छतीत्यादिवाक्यतः ॥
असम्बन्धविनाशौ हि कृतयोर्भाविपूर्वयोः ॥ २१ ॥
तद्यथेत्याद्यलेपादिज्ञापकश्रुतिवाक्यतः ॥
प्रारब्धस्य तु भोगैकनाश्यत्वेन न संशयः ॥ २२ ॥

इति श्रीभाष्यवार्तिके चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

अथोत्क्रान्तिश्चिन्त्यते॥संपद्यते वाङ्मनसि श्रुतिवाक्यप्रमाणतः॥
स्वरूपेण लयो वाचा, न तु वृत्तिस्वरूपतः ॥ १ ॥
प्राणैः सम्पद्यते चैव सर्वेन्द्रिययुतं मनः ॥
विदुषोऽविदुषो वाऽपि समानोत्क्रान्तिरिष्यते ॥ २ ॥
नाडीयोगेन विदुषो यत उत्क्रान्तिरस्ति हि ॥
नाडीविशेषात् पूर्वं तु न विशेषश्रुतिर्यतः ॥ ३ ॥
तत्प्रवेशदशायां वै विशेषश्रवणादिह ॥
मूर्ध्नो निष्क्रमणं यत् स्याद् विद्वद्विषयमेव तत् ॥ ४ ॥
इतरस्मान्निष्क्रमणमविद्वद्विषयं भवेत् ॥
उपासनाया वेलायां ब्रह्मणोऽनुभवो हि यः ॥ ५ ॥
तत्परं श्रुतिवाक्यं स्यादत्र ब्रह्म समश्नुते ॥
अदग्धदेहसम्बन्धपुरुषस्यैव तद्भवेत् ॥ ६ ॥
अर्चिरादिपथा देशविशेषगमनोत्तरम् ॥
ब्रह्मणः प्राप्तिपर्यन्तं संसारव्यदेशतः ॥ ७ ॥
विदुषो देहबन्धोऽत्र न विदग्धो यतः कुतः ॥
सत्यं ब्रूयादिति परं चन्द्रसंवादवाक्यतः ॥ ८ ॥
देहसद्भावतः सूक्ष्मशरीरमनुवर्तते ॥
देवयानपथा गन्तुर्विदुषोऽत्र न संशयः ॥ ९ ॥
प्राणस्योत्क्रमणं नैवमर्वाक् प्राप्तेः परमात्मनः ॥
प्राणानुत्क्रान्तिवचनात् प्राणो न स्थूलदेहवत् ॥ १० ॥
मुञ्चत्यविदुषः किन्तु सूक्ष्मभावेन सङ्गतः ॥
मूर्द्धन्यनाड्या विदुषः समुत्क्रान्तिर्हि स्मर्यते ॥ ११ ॥
ऊर्ध्वमेकःस्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ॥
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिमिति ॥ १२ ॥
भूतसूक्ष्माणि तानीशे संपद्यन्ते श्रुतेर्बलात् ॥

देवतायां परस्यां वै तेजः संपद्यते इति ॥ १३ ॥
किं प्राकृतप्रलयवत् कारणापत्तिरूपिणी ॥
किं वा विभागरूपेति परं वाङ् मनसीतिवत् ॥ १४ ॥
सर्वेषां योनिरूपेशे कारणे सेतिचेन्न हि ॥
अपृथग्भावरूपोऽत्राऽविभागः श्रुतिबोधितः ॥ १५ ॥
पृथग्व्यवहारानर्हसंसर्गाख्यः स एव तु ॥
समा विद्वदविदुषोरुक्तोत्क्रान्तिस्तु सांप्रतम् ॥ १६ ॥
उच्यते सुखबोधाय विशेषो विदुषो गतेः ॥
शताधिकयैव नाड्या विद्वानुत्क्रामतीश्वरः ॥ १७ ॥
आराधनात् प्रसन्नोऽयं विद्यासाम्यर्थ्यमस्य वै ॥
गत्यनुस्मरणं दत्वा हार्देशोऽनुगृहीतवान् ॥ १८ ॥
जीवं ततोऽस्य हृदयं प्रकाशमुपजायते ॥
तत्प्रकाशितसद्द्वारौ विद्वान् मूर्द्धन्यनाडिकाम् ॥ १९ ॥
विजानाति तया तस्य गतिरित्थं प्रजायते ॥
गत आदित्यसद्रश्मीननुसृत्याऽस्य मण्डले ॥ २० ॥
गतिर्दिवा निशास्वेवं रश्मिद्वारैव केवलम् ॥
ज्ञानी निशि मृतो भूतो नाधो गच्छति दुर्गतिम् ॥ २१ ॥
विदुषः कर्मसम्बन्धो यावद्देहं प्रवर्तते ॥
दुर्गतेर्हेतुभूतानामनारब्धफलात्मनाम् ॥ २२ ॥
विद्यासम्बन्धमात्रेण विनाशादुत्तरस्य च ॥
अश्लेषाद् भुज्यमानस्य ह्यन्त्यदेहावधित्वतः ॥ २३ ॥
निश्युत्क्रान्तस्य विदुषो ब्रह्मप्राप्तिरपि स्मृता ॥
अविद्वद्विषयं बोध्यं दिवेत्यादि स्मृतेर्वचः ॥ २४ ॥
मुमुर्षून् प्रति नैवात्र मृतिकालविशेषगीः ॥
देवयानगतिः किन्तु विद्यानिष्ठस्य गीयते ॥ २५ ॥
इति श्रीभाष्यवार्तिके चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

नाडीविशेषेण गतिर्हार्दानुग्रहतो नृणाम् ॥
उक्ता श्रुतौ मार्गभेदश्रवणान्नियमोऽधुना ॥ १ ॥
मार्गोऽर्चिरादिरेको हि सर्वत्र प्रतिपादनात् ॥
न्यूनेऽधिकेऽधिकं न्यूनं गुणानामिव चान्यतः ॥ २ ॥
उपसंहृतिवन्नूनमुपसंह्रियतां परम् ॥
अर्थक्रमो बलीयान् वै पाठस्य क्रमतो भवेत् ॥ ३ ॥
एतान् गमयति ब्रह्माऽमानवो विद्युतः परः ॥
निवेशनीयो वरुणस्ततश्चेन्द्रादयोऽपि हि ॥ ४ ॥
अमानवोऽत्र पुरुषो गमयत्येव ब्रह्म तु ॥
अर्चिरादिपदान्यत्र ह्यर्चिराद्यभिमानिनाम् ॥ ५ ॥
वाचकानि भवन्त्येव देवानां गमयितॄणाम् ॥
आतिवाहिकसंज्ञेनामानवेनेश्वरं प्रति ॥ ६ ॥
गमनं विदुषः प्रोक्तं कार्याख्यं ब्रह्म नैव तु ॥
ब्रह्मैवोपासते ये तु स्वात्मानं ब्रह्मरूपिणम् ॥ ७ ॥
उपासते तानुभयानर्चिराद्यातिवाहिकः ॥
परं ब्रह्म गमयति न तु नामाद्युपासकान् ॥ ८ ॥
ब्रह्मदृष्ट्या परिमितं फलं तेषां निरूप्यते ॥

इति श्रीभाष्यवार्तिके चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

परब्रह्मोपासकानां तथा प्रकृतिवर्जितम् ॥
स्वात्मानं य उपासीत तयोरपुनरागतिः ॥ १ ॥
उक्तेदानीं विमुक्तानामैश्वर्यमिह चिन्त्यते ॥
मानुषात् कर्मणा देहात् समुत्थायाऽमरादिना ॥ २ ॥
साध्येनेवात्र सम्बन्धः किं वा स्वाभाविकं तु यत् ॥
तस्याविर्भाव इत्येवं संशये पूर्वमुच्यते ॥ ३ ॥
देववत् साध्यसम्बन्धः पुरुषार्थानुशासनात् ॥
आविर्भूतात्मरूपस्य सुषुप्तौ पुरुषार्थकः ॥ ४ ॥
न कोऽपि दृश्यते यस्मात् सुखानन्यस्य संश्रुतेः ॥
स्वरूपस्यापरिच्छिन्नानंदस्याविद्यया वृतिः ॥ ५ ॥
न युज्यते प्रकाशस्यावरणं परमात्मनः ॥
प्रकाशस्यानुकूलत्वरूपानन्दस्वरूपता ॥ ६ ॥
न युक्ता हि प्रकाशेऽस्ति नानुकूलप्रवेदिता ॥
अत्रोच्यते समाधानं ज्योतिः संपद्य यत्परम् ॥ ७ ॥
दशाविशेषाविर्भावः स्वस्वरूपस्य निश्चितम् ॥
नित्यप्राप्तस्वरूपस्याविद्यया कर्मरूपया ॥ ८ ॥
तिरोहितस्य निष्पत्तिस्तिरोधानस्य या हृतिः ॥
स्वरूपतोऽयमात्मा हि विजरो हतपाप्मकः ॥ ९ ॥
विमृत्युः सत्यसंकल्पो विशोकः सत्यकामकः ॥
मोक्षः स्वरूपनिष्पत्तिः प्रकरणात् प्रत्यगात्मनः ॥ १० ॥
यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ॥
दोषप्रहाणानुज्ञानमात्मनः क्रियते तथा ॥ ११ ॥
यथोदपानकरणान्न जलं क्रियते परम् ॥
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥ १२ ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ॥

प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ १३ ॥
संकोचः कर्मणा तेषां कर्मबन्धक्षये पुनः ॥
विकाशरूपाविर्भावो ज्ञानादीनां गुणात्मनाम् ॥ १४ ॥
स्वतः किं परमात्माऽयं भिन्नत्वेनानुभूयते ॥
मुक्तेन किं वा भिन्नोऽयमित्येवं संशये श्रृणु ॥ १५ ॥
साधर्म्यवचनाद्भिन्नं पश्यत्यात्मानमत्र सः ॥
इति प्राप्ते परेशानादविभागेन पश्यति ॥ १६ ॥
स्वात्मानं मुक्तसंघोऽत्र सर्वं ब्रह्मेति वाक्यतः ॥
सर्वं परात्मकं तच्च तच्छरीरतयाऽऽत्मनः ॥ १७ ॥
प्रकारभूतमित्येवमभेदवचनक्रमः ॥
अविभागेन तेनाहं ब्रह्मास्मीत्यनुभूयते ॥ १८ ॥
उपपद्य परं ज्योतिस्तिरोधाननिवृत्तितः ॥
आविर्भवति येनायं तद्रूपं प्रविचार्यते ॥ १९ ॥
तत्र जैमिनिराचार्यो मन्यते यस्तु मुच्यते ॥
ब्राह्मधर्मेण संपन्नस्तदापहतपाप्मकः ॥ २० ॥
उपन्यस्ता ब्रह्मगुणा यतो वै प्रत्यगात्मनः ॥
चैतन्यमात्रमेवास्य रूपमाविर्भवेदिदम् ॥ २१ ॥
इत्थं मुक्तावौडुलोमिराचार्यो वदति स्फुटम् ॥
हतपाप्मेत्यादिशब्दा अविद्याजन्यविकृतिम् ॥ २२ ॥
सुखदुःखादिरूपां हि वर्जयन्तीशसंगते ॥
विज्ञानमात्ररूपेऽपि सत्यकामादयो गुणाः ॥ २३ ॥
न विरुद्धा मुक्तजीवे बादरायणसंमते ॥
विज्ञानमात्ररूपत्वं जडव्यावृत्तितोऽस्ति तु ॥ २४ ॥
न गुणाभावतो मुक्ताविति वाक्यार्थनिर्णयः ॥
संकल्पादेव मुक्तानां कामाप्तिः सकला भवेत् ॥ २५ ॥

सत्यसंकल्प एवायमनन्याधिपतिस्तथा ॥
विधौ निषेधे योग्यो यः सोऽन्याधिपतिरुच्यते ॥ २६ ॥
अनन्याधिपतित्वं तु तन्निषेध इतीरितम् ॥
मुक्तस्य न शरीरं स्याद् बादर्याचार्यसंमतम् ॥ २७ ॥
संकल्पतस्तु स्यादेव जैमिन्याचार्यसंमतम् ॥
बादरायण आचार्यो द्वयमेवावदत् स्वयम् ॥ २८ ॥
स्वसृष्टकरणाभावे परसृष्टेन तेन वै ॥
भोगो मुक्तस्य मुक्तो हि न किञ्चित् सृजते विभुः ॥ २९ ॥
संकल्पादेव मुक्तोऽपि भुङ्क्ते लीलारसं स्फुटम् ॥
एकदेशस्थितो दीपो प्रभाद्वाराखिलं गृहम् ॥ ३० ॥
व्याप्नोति तद्वदात्माऽयं ज्ञानद्वारा कलेवरम् ॥
कर्मणाकुञ्चितज्ञानो नात्माभिन्नेऽभिमानभाक् ॥ ३१ ॥
समस्तदेहे मुक्तोऽतोज्ञानव्याप्त्याऽभिमानभाक् ॥
श्रुत्युक्तमस्यानन्त्यं तु तदमुक्तस्य कर्मणा ॥ ३२ ॥
अमुक्तोऽसर्वज्ञमुक्तः सर्वज्ञ इति पठ्यते ॥
जगद्व्यापारवर्जं तु साम्यं तस्येश्वरेण हि ॥ ३३ ॥
आधिकारिकसंस्थाने संस्थिता अधिकारिणः ॥
जगद्व्यापारप्रभृतिप्रत्यक्षं तेषु पठ्यते ॥ ३४ ॥
जन्मनाशविकारादि मुक्तानां नैव वर्तते ॥
आविर्भूता नित्यगुणा मुक्ते स्वाभाविका अपि ॥ ३५ ॥
तथाविधत्वं तेषां वै परेशायत्तमेव हि ॥
ईशानुभवरूपस्य भोगमात्रस्य चैव ह ॥ ३६ ॥
साम्यमुक्तं ब्रह्मणात्र मुक्तानां श्रुतिनिर्णयात् ॥
परेशाधीनमेवास्य सर्वं न पुनरावृतिः ॥ ३७ ॥
करुणासागरस्यास्य नृसिंहस्य कृपावशात् ॥

अनावृत्तिस्तु मुक्तानां कैङ्कर्यपरिशीलनात् ॥ ३८ ॥
तदुपासनसंप्रीतः कर्माविघ्नां विनाश्य च ॥
दत्वा स्वानन्दमतुलं नावर्तयति तं पुनः ॥ ३९ ॥
संछिन्नकर्मबन्धस्याऽकुण्ठितज्ञानधर्मिणः ॥
ब्रह्मानुभवसंप्राप्तानन्दातिसुखभोगिनः ॥ ४० ॥
पुनरावृत्तिशङ्का तु न घटेत कथञ्चन ॥
प्रियः प्रियस्य दुःखं हि न कथञ्चन यच्छति ॥ ४१ ॥

इति श्रीभाष्यवार्तिके चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥
समाप्तोऽयं चतुर्थोऽध्यायः ॥



BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*Nos. 123 & 133.*

# श्रीभाष्यवार्तिकम् ।

श्रीमद्रामानुजाचार्यविशिष्टाद्वैत सिद्धान्तप्रतिपादनपरम् ।

यतीन्द्रमतदीपिका च ।

श्रीगोविन्दाचार्यसूनुश्रीनिवासाचार्यकृता ।

सकलाचार्यमतसंग्रहश्च ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा
रत्नगोपालभट्टेन संशोधितानि ।

# ŚRÎ BHÂSHYA VÂRTIKA,

A TREATISE ON VISISHTÂDVAITA PHILOSOPHY;
*Also* YATÎNDRA MAT DÎPIKÂ,
By Nivâsâ Chârya son of Govindâ Chârya,
*And* Sakalâchâryamat Sangrah.
EDITED BY RATNA GOPÂL BHATTA.

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,
BENARES.
1907.

*Registered under Act XXV. of 1867.* (ALL RIGHTS RESERVED.)

श्रीहरये नमः ।

—:o:—

अयि खलु विपश्चिदपश्चिमाः ! सहृदयवराः ! इदं खलु निवेद्यते तत्रभवत्सु भवत्सु— यदिदं श्रीरामानुजभाष्यवार्तिकं वाराणसेय—संस्कृतपुस्तकमालायां संमुद्रितं वरीवर्ति । अत्र किल विस्तृतश्रीभाष्यार्थः संक्षेपेण बोधसौकर्याय श्लोकैः संगृहीतः ।

अस्य ग्रन्थरत्नस्य अत्यन्तं दुर्लभत्वात् केवलैकपुस्तकलाभेऽपि यथामति संशोध्य संमुद्रितम् । ततश्च मदीयमत्यपराधजाताऽशुद्धि-क्षमायै मयाऽभ्यर्थ्यन्त एव विद्वद्वरा एतदवलोकयितारः । अभ्य-र्थ्यन्ते च पुनर्यदि येषां समीपे प्राचीनलिखितमेतद्ग्रन्थरत्नं भवेत् तैरहं बोधनीय इति ।

पुस्तकमालाया नियतपत्रसंख्यापूर्त्यर्थं, श्रीयतीन्द्रमतदीपिका सहैव मुद्रिता ।

एतत्पुस्तकं च पण्डितवरश्रीसुदर्शनाचार्यैः स्वसंप्रदायभक्त्या संशोध्य स्वकीयं पुस्तकं दत्तम् । यद् विना मदीयेनैकेन पुस्तकेन संशोधनकार्यमसम्भावितमासीत् ।

तथा तैरेव संशोधितः श्रीविष्णुस्वामि—श्रीरामाऽनुजाचार्य—श्रीनिम्बार्काचार्य—श्रीमध्वाचार्यसिद्धान्तसंग्रहः सह संयोजितः ।

तत्र प्रथमतृतीयपुस्तककर्तृनामानुपलम्भादत्र तदनुल्लेखः ।

एतत्पुस्तकत्रयं नानाविधदर्शनप्रकाशनपरायणाऽन्तःकरण श्रीयुतहरिदासगुप्ताभिधमहाशयप्रोत्साहेन प्रकाशितमिति तत्सका-शात्, चौखम्बासंस्कृतपुस्तकालये काश्यां लभ्यमिति सुधीभि-राकलनीयामिति शम् ।

श्रीगणेशाय नमः ।

श्रीमते रामानुजाय नमः ।

# श्रीयतिपतिमतदीपिका ।

विद्वद्वरश्रीनिवासाचार्यकृता ।

---

श्रीवेङ्कटेशं करिशैलनाथं श्रीदेवराजं घटिकाद्रिसिंहम् ॥
कृष्णेन साकं यतिराजमीडे स्वप्ने च दृष्टान् मम देशिकेन्द्रान् ॥१॥
यतीश्वरं प्रणम्याहं वेदान्तार्य्यं महागुरुम् ॥
करोमि बालबोधार्थं यतीन्द्रमतदीपिकाम् ॥ २ ॥

श्रीमन्नारायण एव चिदचिद्विशिष्टाद्वैतं तत्त्वम् । भक्तिप्रपत्तिभ्यां प्रसन्नः स एव उपायः । अप्राकृतदेहविशिष्टः स एव प्राप्य इति वेदान्तवाक्यैः प्रतिपादयतां व्यासबोधायनगुहदेवभाणरुचिब्रह्मानन्दिद्रविडाचार्य्यश्रीपरांकुशनाथयामुनमुनियतीश्वरप्रभृतीनां मतानुसारेण बालबोधार्थं वेदान्तानुसारिणी यतिपतिमतदीपिकाऽऽख्या शारीरकपरिभाषा महाचार्य्यकृपावलम्बिना मया यथामति संग्रहेण प्रकाश्यते । सर्वं पदार्थजातं प्रमाणप्रमेयभेदेन द्विधा भिन्नम् । प्रमाणानि त्रीण्येव । प्रमेयं द्विविधं द्रव्याद्रव्यभेदात् । द्रव्यञ्च द्विविधम् । जडमजडमिति । जडं च द्वेधा प्रकृतिः कालश्चेति । प्रकृतिश्चतुर्विंशत्यात्मिका । कालस्तु उपाधिभेदात् त्रिविधः । अजडं तु द्विविधम् । पराक् प्रत्यगिति । अजडं परागपि तथा । नित्यविभूतिर्धर्म्मभूतज्ञानं चेति । प्रत्यगपि द्विविधः । जीवेश्वरभेदात् । जीवस्त्रिविधः बद्धमुक्तनित्यभेदात् । बद्धोऽपि द्विविधः । बुभुक्षुमुमुक्षुभेदात् बुभक्षुर्द्विविधः । अर्थकामपरो धर्म्मपरश्चेति । धर्म्मपरो द्विविधः ।

देवतान्तरपरो भगवत्परश्चेति । मुमुक्षुर्द्विविधः । कैवल्यपरो मोक्षपरश्चेति । मोक्षपरो द्विविधः । भक्तः प्रपन्नश्चेति । प्रपन्नो द्विविधः । एकान्ती परमैकान्ती चेति । परमैकान्ती द्विविधः । दृप्ताऽऽर्तभेदात् । पञ्चधावस्थित ईश्वरः । परव्यूहविभवान्तर्य्याम्यर्चावतारभेदात् । पर एकधा, व्यूहश्चतुर्द्धा । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदात् । केशवादि व्यूहान्तरं, मत्स्यादयो विभवः पुनरनन्ताश्च । अन्तर्यामी प्रतिशरीरमवस्थितः । अर्चावतारस्तु । श्रीरङ्गवेङ्कटाद्रिहस्तिगिरियादवाद्रिघटिकाचलादिषु सकलमनुजनयनविषयतां गतो मूर्त्तिविशेषः । अद्रव्यं तु सत्त्वरजस्तमःशब्दस्पर्शरूपरसगन्धसंयोगशक्तिभेदाद्दशधैव ।

एवमुद्दिष्टानामुद्देशक्रमेण लक्षणपरीक्षे क्रीयेते । तत्र प्रमाकरणं प्रमाणम् । प्रमाणं लक्ष्यम् । प्रमाकरणत्वं लक्षणम् । यथावस्थितव्यवहारानुगुणज्ञानं प्रमा लक्ष्यम् । यथावस्थितव्यवहारानुगुणज्ञानत्वं लक्षणम् । ज्ञानं प्रमेत्युक्ते शुक्तिकायामिदं रजतमितिज्ञाने अतिव्याप्तिः । अत उक्तं, व्यवहारानुगुणमिति । एवमपि तत्रैवातिव्याप्तिः । भ्रान्तिदशायामपि, इदं रजतमिति व्यवह्रियमाणत्वात् । अत उक्तं, यथावस्थितमिति । यथावस्थितेति पदेन संशयान्यथाज्ञानविपरीतज्ञानव्यावृत्तिः । धर्म्मिग्रहणे मिथोविरुद्धानेकविशेषस्मरणं संशयः । यथा उर्द्ध्वताविशिष्टे, स्थाणुर्वा पुरुषो वेति ज्ञानम् । अन्यथाज्ञानं नाम धर्म्मविपर्य्यासः । यथा कर्तृत्वेन भासमाने आत्मनि कुयुक्तिभिः कर्तृत्वस्य भ्रान्तत्वोपपादनम् । विपरीतज्ञानं नाम धर्म्मिविपर्य्यासः । यथा वस्तुनो वस्त्वन्तरज्ञानम् । लक्षणस्य त्रीणि दूषणानि सन्ति । अव्याप्त्यतिव्याप्त्यऽसंभवभेदात् । लक्ष्यैकदेशे लक्षणस्यावर्तमानत्वमव्याप्तिः । लक्ष्यादन्यत्र प्रवर्तमानत्वमतिव्याप्तिः । लक्ष्ये क्वाप्यविद्यमानत्वमसंभवः । यथा

चक्षुर्विषयो जीव इत्युक्ते असंभव एव। अत्रोक्तदूषणत्रयाभावात् । प्रमाणलक्षणं स्वस्थम् ।

साधकतमं करणम् । अतिशयितं साधकं साधकतमम् । यस्मिन् सत्यविलम्बेन ज्ञानमुत्पद्यते तदतिशयितमित्युच्यते । तेन प्रमाकरणं प्रमाणमिति सिद्धम् । अनधिगतार्थगन्तृ प्रमाणमित्यादिकं तु तत्तद्वादिभिरेव निरस्तत्वादनादरणीयम् । तानि प्रमाणानि प्रत्यक्षानुमानशब्दाख्यानि त्रीण्येव । अत्र साक्षात्कारप्रमाकरणं प्रत्यक्षम् । अनुमानादिव्यावृत्त्यर्थं साक्षात्कार इति । दुष्टेन्द्रियजव्यावृत्त्यर्थं प्रमेति । तच्च प्रत्यक्षं द्विविधं, निर्विकल्पकसविकल्पकभेदात् । निर्विकल्पकं नाम गुणसंस्थानादिविशिष्टप्रथमपिण्डग्रहणम् । सविकल्पकं तु सप्रत्यवमर्शी गुणसंस्थानादिविशिष्टद्वितीयादिपिण्डज्ञानम् । उभयविधमपि एतद् विशिष्टविषयमेव । अविशिष्टग्राहिणो ज्ञानस्यानुपलम्भादनुपपत्तेश्च। ग्रहणप्रकारस्तु—आत्मामनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति।इन्द्रियाणां वस्तुप्राप्यकारित्वनियमात् । अतो घटादिरूपार्थस्य चक्षुरादिरूपेन्द्रियस्य च सन्निकर्षे सति अयं घट इति चाक्षुषज्ञानं जायते । एवमेव स्पार्शनप्रत्यक्षादयोऽपि । द्रव्यग्रहणे संयोगः संबन्धः । द्रव्यगतरूपादिग्रहणे समवायानङ्गीकारात् संयुक्ताश्रयणसंबन्धः । निर्विकल्पकसविकल्पकभिन्नं प्रत्यक्षं द्विविधम् । अर्वाचीनम् । अनर्वाचीनं चेति । अर्वाचीनं पुनर्द्विविधम् । इन्द्रियसापेक्षं तदनपेक्षं चेति । तदनपेक्षं च द्विविधम् । स्वयं सिद्धं, दिव्यं चेति । स्वयं सिद्धं योगजन्यं, दिव्यं भगवत्प्रसादजन्यम् । अनर्वाचीनं तु इन्द्रियानपेक्षं मुक्तनित्येश्वरज्ञानम् । अनर्वाचीनं तु प्रसङ्गादुक्तम् । एवं साक्षात्कारप्रमाकरणं प्रत्यक्षमिति सिद्धम् ।

ननु यथावस्थितव्यवहारानुगुणज्ञानं प्रमेत्युक्तम् । एवञ्च स्मृ-

तेरपि यथावस्थितव्यवहारानुगुणत्वेन प्रामाण्यात् स्मृतेरपि प्रमाणत्वेन परिगणनाच्च त्रीण्येव प्रमाणानीति कथं प्रतिपाद्यते इति चेत् । उच्यते । स्मृतेः प्रामाण्याङ्गीकारेऽपि संस्कारसापेक्षत्वात् तस्य प्रत्यक्षमूलभूतत्वान्मूलभूते प्रत्यक्षेऽन्तर्भाव इति न पृथक् प्रमाणत्वकल्पनम् । अतस्त्रीण्येवेति संभवन्ति । स्मृतिर्नाम पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानम् । संस्कारोद्बोधश्च, सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इत्युक्तप्रकारेण क्वचित्सदृशदर्शनाद्भवति, क्वचिददृष्टात्, क्वचिच्चिन्तया । आदिशब्देन साहचर्यस्यापि ग्रहणात्तेनापि च भवति । सादृश्यजा यथा देवदत्तयज्ञदत्तयोः सदृशयोर्देवदत्तदर्शनेन यज्ञदत्तस्मृतिः । द्वितीया यथा यादृच्छिकात् । कालान्तरानुभूतश्रीरङ्गादिदिव्यदेशस्मृतिः । तृतीया यथा चिन्त्यमाने सति श्रीवेङ्कटेशस्य कमनीयदिव्यमङ्गलविग्रहस्मृतिः । चतुर्थी तु सहचरितयोर्देवदत्तयज्ञदत्तयोर्मध्ये अन्यतरदर्शनेन तदन्यतरस्मृतिः । सम्यक् पूर्वमनुभूतस्य स्मृतिविषयत्वनियमः । क्वचित्कालदैर्घ्याद् व्याध्यादिना वा संस्कारप्रमोषात् स्मृत्यभावः ।

यथा स्मृतेः प्रत्यक्षेऽन्तर्भावस्तथा सोऽयं देवदत्त इति प्रत्यभिज्ञाया अपि प्रत्यक्षेऽन्तर्भावः।अस्मन्मते अभावस्य भावान्तररूपत्वात् तज्ज्ञानस्यापि प्रत्यक्षान्तर्भावः। भूतले घटात्यन्ताभावो भूतलमेव। घटप्रागऽभावो नाम मृदेव । घटध्वंसश्च कपालमेव । प्रायः पुरुषेण अनेन भवितव्यम्। एतदूहः संशय उक्तः। एतयोरपि प्रत्यक्षेऽन्तर्भावः। पुण्यपुरुषनिष्ठा प्रतिभापि प्रत्यक्षेऽन्तर्गता । सर्वं विज्ञानं यथार्थमिति वेदान्तविदां मतमित्युक्तत्वाद्भ्रमादिप्रत्यक्षज्ञानं यथार्थमेव। अख्यात्यात्मख्यात्यनिर्वचनीयताख्यात्यन्यथाख्यात्यसत्ख्यातिवादिनो निरस्य सत्ख्यातिपक्षस्वीकारात् । सत्ख्यातिर्नाम ज्ञानविषयस्य सत्यत्वम् । तर्हि भ्रमत्वं कथमिति चेद्, विषयव्यवहारबाधाद्

भ्रमत्वं तदुपपादयामः। पञ्चीकरणप्रक्रियया पृथिव्यादिषु सर्वत्र सर्वभूतानां विद्यमानत्वात्। अत एव शुक्तिकादौ रजतांशस्य विद्यमानत्वाज्ज्ञानविषयस्य सत्यत्वस्य स्वल्पत्वात् तत्र न व्यवहार इति तज्ज्ञानं भ्रमः। शुक्त्यंशभूयस्त्वज्ञानाद् भ्रमनिवृत्तिः। स्वप्नादिज्ञानं तु सत्यमेव। तत्तत्पुरुषानुभाव्यतया तत्तत्कालावसानान् रथादीन् परमपुरुषः सृजतीति श्रुत्याऽवगम्यते। पीतः शङ्ख इत्यादौ नयनवर्तिपीतद्रव्यसंभिन्ना नयनरश्मयः शङ्खादिभिः सह संयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत् पीतः शङ्ख इति प्रतीयते। सूक्ष्मत्वात् पीतिमा स्वनयननिष्क्रान्ततया स्वेनैव गृह्यते, न त्वन्यैः। जपाकुसुमसमीपवर्तिस्फटिकमणिरपि रक्त इति गृह्यते। तज्ज्ञानं सत्यमेव। मरीचिकायां जलज्ञानमपि पञ्चीकरणप्रक्रियया पूर्वोक्तवदुपपद्यते। पञ्चीकरणप्रक्रिया तूत्तरत्र वक्ष्यते। दिग्भ्रमोऽपि तथैव। दिगन्तरस्य विद्यमानत्वात् अवच्छेदकमन्तरेण दिगिति द्रव्यान्तरानङ्गीकाराच्च। अलातचक्रादौ तु शैघ्र्यादन्तरालाग्रहणात्तत्तद्देशसंयुक्ततत्तद्वस्तुन एव चक्राकारेण ग्रहणम्। तदपि सत्यम्। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो नयनरश्मयो दर्पणादिग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात् तथा प्रतीतिः। द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भतिमिरादिभिर्नयनतेजोगतिभेदेन सामग्रीभेदात् सामग्रीद्वयमन्योत्पत्तिनिरपेक्षं चन्द्रद्वयग्रहणे हेतुर्भवति। सामग्रीद्वयं पारमार्थिकम्। तेन द्विचन्द्रज्ञानं भवति। अतः सर्वं ज्ञानं सत्यं सविशेषविषयं च। निर्विशेषवस्तुनोऽग्रहणात्। एवंभूतं प्रत्यक्षं, भेदविशिष्टमेव प्रथमतो गृह्णाति। भेद इति व्यवहारे तु प्रतियोग्यपेक्षा, न स्वरूपे। तेनानवस्थान्योन्याश्रयदोषोऽपि नास्ति। उपर्युपर्यपेक्षाऽनवस्था, परस्परापेक्षाऽन्योन्याश्रयः॥

ननु दशमस्त्वमसीत्येतदपि प्रत्यक्षं किन्न स्यादितिचेन्न । त्वमित्येतस्य प्रत्यक्षत्वेऽपि दशमोऽहमित्यस्य वाक्यजन्यत्वात् । यदि दशमोऽहमित्यस्य प्रत्यक्षविषयत्वं तर्हि धर्मवाँस्त्वमसीत्येतस्यापि प्रत्यक्षत्वं स्यात् । अङ्गीकारे अतिप्रसङ्गात् । अत एव तत्त्वमसीति वाक्यस्य नापरोक्षज्ञानजनकत्वम् । एतेन प्रत्यक्षप्रमाकरणं प्रमाणम् । प्रमा च आत्मचैतन्यमेव । चैतन्यं च त्रिविधम्, अन्तःकरणावच्छिन्नचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं, विषयावच्छिन्नचैतन्यं चेति । यदा त्रयाणामैक्यं तदा साक्षात्कारः । सोऽपि निर्विशेषविषय एव अभेदमेव गृह्णातीत्यादिकुदृष्टिकल्पना निरस्ता । निर्विकल्पकं तु नामजात्यादियोजनाहीनं वस्तुमात्रावगाहि किञ्चिदिदमित्यादिनैयायिकोक्तपि निरस्तम् । ननु, काणादं पाणिनीयं च सर्वशास्त्रोपकारकमित्युक्तत्वात् कथं गौतममतनिरास इतिचेदुच्यते । नास्माभिः कार्त्स्न्येनास्य मतस्य निरासः क्रियते । यावदिह युक्तियुक्तं तावत् स्वीक्रियते । परकल्पिततटाकोपजीवनवत् । न खलु तटाकस्थः पङ्कोऽपि स्वीक्रियते । अतः परमाणुकारणत्ववेदपौरुषेयत्वेश्वरानुमानिकत्वजीवविभुत्वसामान्यसमवायविशेषाणां पदार्थत्वेन स्वीकारः । उपमानादेः पृथक् प्रमाणत्वकल्पनम् । संख्यापरिमाणपृथक्त्वपरत्वापरत्वगुरुत्वद्रवत्वादीनां पृथक्गुणत्वकल्पनम् । दिशोऽपि द्रव्यत्वकल्पनमित्यादिसूत्रकारादिविरुद्धा प्रक्रिया नास्माभिः स्वीक्रियते इति न विरोधः ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्य्यस्य प्रियतमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां प्रत्यक्षनिरूपणं नाम प्रथमोऽवतारः ॥ १ ॥

अथानुमानं निरूप्यते । व्याप्यस्य व्याप्यत्वानुसन्धानाद् व्यापकविशेषप्रमितिरनुमितिः । तत्करणमनुमानम् । व्याप्यस्य धूमस्य अग्निव्याप्यत्वानुसन्धानाद् व्यापकविशेषप्रमितिर्वह्निप्रमतिः । अनधिकदेशकालनियतं व्याप्यम् । अन्यूनदेशकालवर्त्ति व्यापकम् । तदिदमविनाभूतं व्याप्यं, तत्प्रतिसंबन्धि व्यापकमिति । तेन निरुपाधिकतया नियतसंबन्धो व्याप्तिरित्युच्यते । सेयं, यत्र धूमस्तत्र वह्निरिति व्याप्तिर्भूयोदर्शनाद्गृह्यते । व्याप्तिर्द्विविधा । अन्वयव्यतिरेकभेदात् । साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः । यथा यो यो धूमवान् स सोऽग्निमानिति । साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्तिर्व्यतिरेकव्याप्तिः । यथा योऽनग्निः स निर्धूम इति । सेयमुभयविधा व्याप्तिरुपाधिसंभवे दुष्यति । साध्यव्यापकत्वे सति साधनाव्यापकत्वम् उपाधिः । यथा वह्निना धूमे साध्यमाने आर्द्रेन्धनमुपाधिः । मैत्रीतनयत्वेन श्यामत्वे साध्यमाने शाकपाकजत्वमुपाधिः । स चोपाधिर्द्विविधः । निश्चितः शङ्कितश्चेति । निश्चितो यथा । विप्रतिपन्ना सेवा दुःखहेतुः । सेवात्वात् । राजसेवावदित्यत्र पापारब्धत्वमुपाधिः । अयन्तु ईश्वरसेवायां नास्तीति निश्चयादयं निश्चितोपाधिः । शङ्कितो यथा । विप्रतिपन्नो जीव एतच्छरीरावसाने मुक्तिमान् । निष्पन्नसमाधित्वात् । शुकादिवदित्यत्र कर्मात्यन्तपरिक्षय उपाधिः । स च निष्पन्नसमाधौ विप्रतिपन्ने जीवे, अस्ति नास्तीति सन्दिग्धत्वाच्छङ्कितोपाधिः । अतो निरुपाधिकसंबन्धवद् व्याप्यमिति सिद्धम् । व्याप्यं साधनं लिङ्गमिति नार्थान्तरम् । तस्य द्वे रूपे अनुमित्यङ्गभूते । व्याप्तिः पक्षधर्मता चेति । पञ्चरूपाण्यपि सन्ति । तानि च, पक्षव्यापकत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । सिसाधयिषितधर्मविशिष्टो धर्मी पक्षः । यथा अग्निम-

त्त्वादिसाधने पर्वतादिः । सिसाधयिषितसजातीयधर्म्मवान् सपक्षः । यथा महानसादिः । साध्यतज्जातीयशून्यो विपक्षः । यथा महाह्रदादिः । प्रबलेन प्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वं बाधितविषयत्वम् । यथा महाह्रदोऽग्निमानित्यादि । तदभावस्त्वबाधितविषयत्वम् । समबलतया प्रतीयमानप्रमाणोपरोधाभावोऽसत्प्रतिपक्षत्वम् । एवंभूतं व्याप्यं द्विविधम् । अन्वयव्यतिरेकिकेवलान्वयिभेदात् पूर्वोक्तपञ्चरूपोपपन्नं व्याप्यम् । अन्वयव्यतिरेकि यथा । पर्वतोऽग्निमान् धूमवत्त्वात् । यो यो धूमवान् स सोऽग्निमान् । यथा महानसः । योऽनग्निः स निर्धूमः । यथा महाह्रद इति । तादृशमेव विपक्षरहितं व्याप्यं केवलान्वयि । यथा, ब्रह्म शब्दवाच्यम् । वस्तुत्वाद् घटवत् । विपक्षाभावात् केवलान्वयी चतूरूपोपपन्नः । केवलव्यतिरेकिणि साध्याप्रसिद्धेस्तद्व्यतिरेकव्याप्तिर्दुर्ग्रहा । अतः केवलव्यतिरेकिनिरासः । केवलान्वयिनि अन्वव्यतिरेकिणि चात्यन्तातीन्द्रियार्थगोचरता निरस्ता । तदेतदनुमानं स्वार्थं परार्थं चेति द्विधा विभज्य केचिदाहुः । सर्वेषामनुमानानां स्वप्रतिसंधानादिबलेन प्रवृत्ततया स्वव्यवहारमात्रहेतुत्वमिति स्वार्थानुमानमेवेत्यपरे । तदनुमानबोधकवाक्यं प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवसंयुक्तम् । तत्र पक्षवचनं प्रतिज्ञा । यथा पर्वतोऽग्निमानिति । लिङ्गस्य वचनं हेतुः । यथा धूमवत्त्वादिति । व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनमुदाहरणम् । तद् द्विधा । अन्वयव्यतिरेकिभेदात् । यथा, यो धूमवान् सोऽग्निमान् । यथा महानस इत्यन्वयोदाहरणम् । योऽनग्निः, स निर्धूमः । यथा महाह्रद इति व्यतिरेकोदाहरणम् । दृष्टान्तनिदर्शनेन व्याप्ततया पक्षे हेतूपसंहारवाक्यमुपनयः । सोऽपि द्विविधः । अन्वयव्यतिरेकभेदात् । तथा धूमवानित्यन्वयोपनयः । अयं च न

तथा निर्धूम इति व्यतिरेकोपनयः। हेतुपूर्वकं पक्षे साध्योपसंहारवाक्यं निगमनम्। अयमपि द्विविधस्तथैव। यथा, तस्मादग्निमानित्यन्वयेन निगमनम्। तस्मादयं निरग्निर्न भवतीतिव्यतिरेकेण। एवं पञ्चावयववादिनो नैयायिकाः। प्रतिज्ञाहेतूदाहरणरूपत्र्यवयववादिनो मीमांसकाः। उदाहरणोपनयरूपावयवद्वयवादिनः सौगताः। अस्माकं त्वनियमः। क्वचित् पञ्चावयवः, क्वचित्त्र्यवयवः, क्वचिद् द्व्यवयवः। उदाहरणोपनयाभ्यामेव व्याप्तिपक्षधर्म्मतयोः सिद्धत्वात्। तावतैव अनुमित्युपपत्तेश्च। मृदुमध्यमकठोरधियां विस्तरसंग्रहाभ्यां व्यवहार उपपद्यते इत्यनियम एव। एवं पञ्चावयवसंयुक्तः सद्धेतुरेव वह्न्यनुमापकः। सद्धेतुरित्युक्तत्वाद् धूमसदृशधूलीपटलान्न वह्न्यनुमितिः॥

अन्ये हेतुवद्भासमाना हेत्वाभासाः। ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदेन पञ्चप्रकारः। तत्रासिद्धस्त्रिविधः। स्वरूपासिद्ध, आश्रयासिद्धो व्याप्यत्वासिद्धश्चेति। स्वरूपाऽसिद्धो यथा, अनित्यो जीवश्चाक्षुषत्वात्। घटवदिति। आश्रयाऽसिद्धस्तु व्योमारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवदिति। व्योमारविन्दमाश्रयः। स चासिद्धः। व्याप्यत्वासिद्धो द्विविधः। एको व्याप्तिग्राहकप्रमाणाभावादपरस्तु उपाधिसद्भावात्। आद्यो यथा। यत् सत् तत्क्षणिकमिति। क्षणिकत्वसत्त्वयोर्व्याप्तिग्राहकप्रमाणासिद्धेः। द्वितीयो यथा। अग्निष्टोमीयहिंसा अधर्मसाधिका। हिंसात्वात्। क्रतुबाह्यहिंसावदित्यत्र निषिद्धत्वमुपाधिः। अतो हिंसात्वहेतुः सोपाधिकः। साध्यविपरीतव्याप्तो हेतुर्विरुद्धः। तद्यथा। नित्या प्रकृतिः, कृतकत्वात्। कालवत्। कृतकत्वहेतुः साध्याभावव्याप्तः। साध्याभावव्याप्तो हेतुर्विरुद्धः सव्यभिचारो नैकान्तिकः। स च द्विविधः। साधारणोऽसाधारणश्चेति। पक्षसपक्ष-

विपक्षवृत्तिः साधारणः । यथा शब्दो नित्यः, प्रमेयत्वात् । कालवत् । असाधारणस्तु विपक्षसपक्षव्यावृत्तः । यथा । भूमिर्नित्या, गन्धवत्त्वादिति । प्रकरणसमस्तु साध्यविपरीतसाधकहेत्वन्तरवान् । यथा ईश्वरोऽनित्यः । नित्यधर्मरहितत्वात् । ईश्वरो नित्यः । अनित्यधर्म्मरहितत्वादिति । अयमेव सत्प्रतिपक्षः । कालात्ययापदिष्टो यथा । यस्य हेतोः साध्याभाववान् पक्षः स कालात्ययापदिष्टः। अग्निरनुष्णः पदार्थत्वाज्जलवत् । अयं च प्रत्यक्षेण उष्णत्वावधारणाद्बाधितः ॥

एवमनुमाने निरूपिते उपमानादेरनुमानादावन्तर्भावः । यथा अतिदेशवाक्यार्थस्मरणसहकृतगोसादृश्यविशिष्टपिण्डज्ञानमुपमानम्। गवयमजानन्नपि, यथा गौस्तथा गवय इति कुतश्चिदारण्यकवाक्याच्छ्रुत्वा वनं गतो वाक्यार्थं स्मरन् यदा गोसादृश्यविशिष्टपिण्डं पश्यति तदा तद्वाक्यार्थस्मरणसहकृतसदृशपिण्डज्ञानं जायते। तदुपमानमित्युच्यते । स्मरणरूपत्वात् तस्य प्रत्यक्षेऽन्तर्भावः । व्याप्तिग्रहणापेक्षत्वादनुमाने अन्तर्भावः। वाक्यजन्यत्वाच्छब्दे वा अन्तर्भाव ऊह्यः ॥

अर्थापत्तिर्नाम–दिवा अभुञ्जानस्य पुरुषस्य पीनत्वदर्शनाद् रात्रौ भोजनं कल्प्यते। एतस्या अनुमाने अन्तर्भावः ॥

तर्को नाम–व्याप्याङ्गीकारेण व्यापकप्रसञ्जनम् । तद्यथा पर्वतो वह्निमान् धूमवत्त्वादित्यनुमाने। धूमोऽस्तु वह्निर्मास्तु इत्युक्ते यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति। एतस्य प्रमाणानुग्राहकत्वं, तर्क्कानुगृहीतप्रमाणपूर्वकत्वावधारणं निश्चयः। वीतरागकथा वादः । पक्षद्वयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनाहीना तु वितण्डा । अविवक्षितशब्दार्थारोपणदूषणं छलम् । स्वव्यापिदूषणं जातिः । असदुत्तरं जातिरिति वा ।

पराजयहेतुर्निग्रहस्थानम् इत्येषामनुमानाङ्गत्वादनुमाने अन्तर्भावः । क्वचित्क्वचिन्नैयायिकमतानुसारिव्यवहारस्तु तन्मतानुसारेणोक्त इति न विरोधः । इत्यनुमानं निरूपितम् ॥

इति श्रीवाधूलिकुलतिलकश्रीमन्महाचार्य्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतिपतिमतदीपिकायां अनुमाननिरूपणं नाम द्वितीयोऽवतारः ॥ २ ॥



अनुमाननिरूपणानन्तरं शब्दो निरूप्यते । अनाप्तानुक्तवाक्यजनिततदर्थविज्ञानं शाब्दज्ञानम् । तत्करणं शब्दप्रमाणम् । अनाप्ताऽनुक्तेत्युक्तत्वाद् वेदस्य पौरुषेयत्वमतनिरासः । करणदोषबाधकप्रत्ययाभाववद् वाक्यं वा । सर्गादौ भगवाँश्चतुर्मुखाय पूर्वपूर्वक्रमविशिष्टान् वेदान् स्मृत्वा स्मृत्वा उपदिशतीत्युक्त्या वेदस्य नित्यत्वमपौरुषेयत्वं च सिद्धमिति करणदोषाभावो बाधकप्रत्ययाभावश्च । ननु वेदवाक्यानां मीमांसकैः कार्यपरतयैव प्रामाण्यस्वीकारात् सिद्धब्रह्मपरवाक्यानां व्युत्पत्त्यसंभवाच्च कथं प्रामाण्यमितिचेन्न । सिद्धब्रह्मपरवाक्यानामपि उपासनारूपकार्य्यान्वयस्वीकारात् । पिता ते सुखमास्ते इति लौकिकसिद्धपरवाक्यस्यापि बोधकत्वदर्शनाद् बालानां लोके मातापितृप्रभृतिभिः, अम्बाताततमातुलचन्द्रादिषु अङ्गुल्या निर्दिश्य तदभिधायकशब्दान् प्रयुञ्जानैः क्रमेण भूयः शिक्षितानां तत्तदर्थबुद्ध्युत्पत्तिदर्शनाद् वेदेऽपि परिनिष्पन्नेऽप्यर्थे शब्दस्य बोधकत्वं संभवतीति नाप्रामाण्यशङ्कावकाशः । तर्हि अभिचारादिप्रतिपादकवेदांशस्य कथं प्रामाण्यमिति न शङ्कनीयम् । तस्य दृष्टफलदर्शनेन अदृष्टस्वर्गादिफलसाधनादौ प्रवृत्तिप्रयोजकत्वात् । यूपादित्यवाक्यं तु आदित्यवद्यूपप्रकाशनपरम् । अतः कृत्स्नस्य वेदस्य प्रामाण्यम् । स च वेदः कर्म्मब्रह्मप्रतिपादकपूर्वोत्तरभागाभ्यां द्विधा भिन्नः । आराधनकर्म्मप्रतिपादकं पूर्वकाण्डम् । आराध्यप्रतिपादकमुत्तरकाण्डम् । उभयोर्मीमांसयोरैकशास्त्र्यम् । भागद्वयात्मको वेद ऋग्यजुःसामाथर्वणरूपेण चतुर्धावस्थितः पुनरनन्तप्रकारश्च ऋगादिबहुप्रकारवान् वेदो मन्त्रार्थवादविधिरूपेण त्रिविधः । अनुष्ठेयार्थप्रकाशको मन्त्रः । विध्यधीनप्रवृत्त्युत्तम्भकवाक्यविशेषोऽर्थवादः । हितानुशासनवाक्यमिह विधिः । स च त्रिविधः । अपूर्वपरिसंख्यानियमभेदात् । ते पुनर्नित्य-

नैमित्तिककाम्यादिभेदाद् बहुविधाः । व्रीहीन् प्रोक्षतीति अपूर्वविधिः । मनोमयत्वाद्युपासनविधिर्विशिष्टविधिः । इमामगृभ्णन्नित्यश्वरशनाविधिः परिसंख्याविधिः । गुर्वभिगमनादिविधिर्नियमविधिः । सन्ध्योपासनादिर्नित्यविधिः । जातेष्ट्यादिविधिर्नैमित्तिकविधिः । ज्योतिष्टोमादिविधिः काम्यविधिः । एवं विध्यऽर्थवादमन्त्रात्मकस्य वेदस्य, छन्दः कल्पः शिक्षा निरुक्तं ज्योतिषं व्याकरणम् इत्येतान्यङ्गानि । छन्दः अनुष्टुबादिप्रतिपादनरूपः। श्रौतस्मार्तप्रतिपादनपरः कल्पः । शिक्षा वर्णनिर्णयात्मिका । निरुक्तम् अपूर्वार्थप्रतिपादकम् । ज्योतिषम् अध्ययनतदर्थाऽनुष्ठानकालनिर्णयात्मकम् । व्याकरणं तु सुशब्दस्वरादिसमर्थनपरम् । एवं साङ्गस्य वेदस्य प्रामाण्यं सिद्धम् । अथ श्रुत्यविरुद्धाचारव्यवहारप्रायश्चित्तादिप्रतिपादिका आप्तप्रणीता स्मृतिः प्रमाणम् । हिरण्यगर्भादीनामाप्तत्वेऽपि तेषां गुणत्रयवश्यत्वसंभवात् तत्कर्तृकयोगकपिलादिस्मृतीनां मन्वादिस्मृत्यविरुद्धांश एव प्रमाणम् । तत्त्वविपर्यासाद् विरुद्धांशोऽप्रमाणम् । वेदोपबृंहणरूपेतिहासपुराणयोरपि प्रामाण्यं स्वतः सिद्धम् । तत्र भारतरामायणयोः क्वचित् क्वचिद्विरोधभानेऽपि तत्त्वांशे वेदान्तवाक्यवदऽविरोधो नेयः। सर्गादिपञ्चप्रतिपादकपुराणेष्वपि सात्त्विकराजसतामसभेदभिन्नेषु तत्त्वांशे विरोधाभावाद् विरुद्धांशोऽप्रमाणम् । अन्यत् सर्वं प्रमाणम् । पाशुपत्याद्यागमा अपि तथैव । आगमदिव्यतन्त्रतन्त्रान्तरसिद्धान्तभेदभिन्नस्य श्रीपञ्चरात्र्यागमस्य क्वचिदपि वेदविरोधाभावात् कार्त्स्न्येन प्रामाण्यम् । एवं वैखानसाऽऽगमस्यापि । धर्म्मशास्त्राणामपि तथैव । शाण्डिल्यपराशरभरद्वाजवशिष्ठहारीतादयो धर्मशास्त्रप्रणेतारः । शिल्पायुर्वेदगान्धर्वभरतादिकमप्युपयुक्तांशे तथैव। शिल्पो नाम कर्षणादिगोपुरप्राका-

रादिप्रतिपादकः । आयुर्वेदो वैद्यकम् । गान्धर्वो गानादिनिरूपकः। भरतागमो नृत्यादिविधायकम् । पुनश्चतुःषष्टिकलारूपेषु तत्त्वोपायपुरुषार्थोपयुक्तानि प्रमाणानि। बकुलाभरणादिसूरिसूक्तयः कात्स्न्र्येन प्रमाणतराः । श्रीमद्रामानुजाचार्य्यप्रभृतिभिः प्रणीताः श्रीभाष्यादिप्रबन्धाः प्रमाणतमाः । पुरुषस्वातन्त्र्याधीनरचनाविशेषविशिष्टं पौरुषेयम् । एतेन काव्यनाटकाऽलङ्कारादीनामपि लक्षणमुक्तं स्यात् । एवमाप्तेनोच्चारिताकाङ्क्षायोग्यतासन्निधिमल्लौकिकवाक्यान्यपि प्रमाणानि। यथा नद्यास्तीरे पञ्चफलानि सन्तीत्यादीनि । एवं वैदिक–लौकिक–साधारणं वाक्यं द्विविधम् । मुख्यवृत्तिगौणवृत्तिभेदात् । मुख्यवृत्तिरभिधावृत्तिः। यथा सिंहशब्दस्य मृगेन्द्रे अभिधावृत्तिः । योगरूढ्यादिवृत्तिभेदवशाद् बहुविधा । मुख्यार्थबाधे सति तदाऽऽसन्नेऽर्थे वृत्तिरौपचारिकी। सा द्विविधा । लक्षणागौणीभेदात् । प्रथमा यथा गङ्गायां घोष इत्यत्राधिकरणस्य बाधात् तीरे लक्षणा । द्वितीया यथा, सिंहो देवदत्त इत्यत्र देवदत्ते शौर्य्यादिगुणयोगः । एवं वैदिकलौकिकरूपं सर्वं वाक्यजातं सविशेषविषयकं भेदविषयकं च। शरीरवाचकशब्दानां यथा शरीरिणि पर्य्यवसानम्, एवं भगवच्छरीरभूतब्रह्मरुद्राऽग्नीन्द्रादिचिद्वाचकशब्दानां तथा शरीरभूतप्रकृतिकालाकाशप्राणाद्यचिद्वाचकशब्दानां शरीरिणि परमात्मात्मनि नारायणे पर्य्यवसानमुपपादयन्त्याचार्य्याः । वेदान्तज्ञानाद्युत्पत्तिपूर्व्यत इत्युक्तम्। नारायणस्य सर्वशब्दवाच्यत्वं सर्वशरीरकत्वमित्यादिकं तु उपरि ईश्वरनिरूपणे प्रतिपादयिष्यामः। इति शब्दो निरूपितः

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्य्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शब्दनिरूपणं नाम तृतीयोऽवतारः ॥ ३ ॥

प्रमाणनिरूपणानन्तरं प्रमेयं निरूप्यते । प्रकर्षेण मेयं प्रमेयम् । तच्च द्विविधम् । द्रव्याद्रव्यभेदात् । द्रव्यम् उपादानम् । अवस्थाश्रयमुपादानम् । ननु द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्था इति मतान्तरस्थैः षोढा परिगणनात् कथं द्रव्याद्रव्यभेदेन द्विधा समर्थनमिति चेदुच्यते । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् कर्म पञ्चधाऽवस्थितमिति कल्पने गौरवात् चलनात्मकं कर्मेत्येकधैवोपपत्तेस्तस्यापि संयोगप्रागभावादिनैवोपपत्तेः, संस्थानमेव जातिरिति संस्थानातिरेकिसामान्यानङ्गीकारात्, समवाये समवायान्तराङ्गीकारे अनवस्थानात्, तस्यापि संयुक्तविशेषणतयैवोपपत्तेर्जीवेश्वरयोरणुत्वविभुत्वादिविभाजकधर्ममन्तरेण, विशेष–इति किञ्चित्पदार्थान्तराङ्गीकारे गौरवाद् अतः कर्मसामान्यविशेषसमवायानां पृथग् द्रव्यत्वेन अनङ्गीकाराच्च द्रव्यमद्रव्यमिति द्विधा विभाग उपपद्यते ।

एतेन अभावः सप्तमपदार्थ इत्यपि निरस्तम् । अभावस्य भावान्तररूपत्वात् प्रागभावो नाम पूर्वावस्थापरम्परा, प्रध्वंसाभावो नाम उत्तरावस्थापरम्परा, अत्यन्ताभावान्योन्याभावौ तु धर्म्यन्तरस्वरूपावेव । एतस्य प्रत्यक्षेऽन्तर्भावः पूर्वमुक्तः । उपादानं द्रव्यमित्युक्तम् । गुणाश्रयो वा द्रव्यमिति सामान्यलक्षणं संभवति । तानि च द्रव्याणि षट् प्रकृतिकालशुद्धसत्त्वधर्मभूतज्ञानजीवेश्वरभेदात् । तत्र जडाजडरूपयोर्विभक्तयोर्मध्ये जडलक्षणमुच्यते । आमिश्रसत्त्वरहितं जडमिति ।

तद् द्विविधं प्रकृतिकालभेदात् । तत्र सत्त्वरजस्तमोरूपगुणत्रयाश्रया प्रकृतिः । सा नित्या अक्षरा अविद्या मायेति शब्दवाच्या च । तस्यां भगवत्संकल्पाधीनगुणवैषम्यात् कार्योन्मुखावस्था अव्यक्तशब्देनोच्यते । तस्मान्महानुत्पद्यते । स महान् सात्त्विकराजस-

तामसभेदात् त्रिधावस्थितः । महतोऽहंकार उत्पद्यते । सोऽपि सात्त्विकाहङ्कारो राजसाहङ्कारस्तामसाहङ्कारश्चेति त्रिविधो मतः । एतेषां त्रयाणां वैकारिकस्तैजसो भूतादिरिति नामान्तराण्यपि संभवन्ति । तेषु वैकारिक इति प्रसिद्धाद्राजसाहङ्कारसहकृतात् सात्त्विकाहङ्कारादेकादशेन्द्रियाणि जायन्ते । सात्त्विकाहङ्कारोपादानकं द्रव्यमिन्द्रियम् । इन्द्रियं द्विविधं–ज्ञानेन्द्रियं, कर्मेन्द्रियं चेति । ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियम् । तत् षोढा मनःश्रोत्रचक्षुर्घ्राणरसनात्वग्भेदात् । स्मृत्यादिकरणम् इन्द्रियं मनः । तच्च हृदयप्रदेशवृत्ति । बुद्ध्यहङ्कारचित्तादिशब्दवाच्यं बन्धमोक्षहेतुभूतं च । शब्दादिपञ्चके शब्दमात्रग्रहणशक्तमिन्द्रियं श्रोत्रम् । तन्मनुष्यादीनां कर्णशष्कुल्यवच्छिन्नप्रदेशवृत्ति । द्विजिह्वानां नयनवृत्ति । एवं रूपमात्रग्रहणशक्तमिन्द्रियं चक्षुः । तत् सर्वेषां नयनवृत्ति । गन्धमात्रग्रहणशक्तमिन्द्रियं घ्राणं नासाग्रवृत्ति । रसमात्रग्रहणशक्तमिन्द्रियं रसनेन्द्रियं जिह्वाग्रवृत्ति । स्पर्शमात्रग्रहणशक्तमिन्द्रियं त्वगिन्द्रियं सर्वशरीरवृत्ति । नखदन्तकेशादिषु प्राणमान्द्यतारतम्यात् स्पर्शानुपलम्भः । श्रोत्रादीन्द्रियाणां भौतिकत्वप्रतिपादनं भूताऽऽप्यायितत्वेनौपचारिकम् । एतेषां विषयसम्बन्धः क्वचित् संयोगः क्वचित्संयुक्ताश्रयणमिति वृद्धसंप्रदायः । उच्चारणादिष्वन्यतमक्रियाशक्तत्वं कर्मेन्द्रियसामान्यलक्षणम् । तच्च वाक्पाणिपादपायूपस्थभेदात् पञ्चधाऽवस्थितम् । वर्णोच्चारणमिन्द्रियं वाक् । तच्च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्द्धरूपस्थानाष्टकवृत्ति । मृगादिष्वदृष्टविरहात्तदभावः । शिल्पादिकरणमिन्द्रियं पाणिः । स च मनुष्यादीनां च अङ्गुल्यादिवृत्तिः । वारणादीनां नासावृत्तिः । संचरणकरणमिन्द्रियं पादः । स च मनुष्यादीनां चरणवृत्तिः । भुजङ्गपतङ्गादीनामुरःपक्षादिवृत्तिः ।

मलादित्यागकरणमिन्द्रियं पायुः । स च तत्तदवयववृत्तिः । आ-
नन्दविशेषकरणमिन्द्रियम् उपस्थः । स च मेहनादिवृत्तिः । ए-
तानीन्द्रियाण्यणूनि । परकायप्रवेशे लोकान्तरगमनादिषु च जीवेन
सह गमनमिन्द्रियाणाम् । मुक्तिदशायाम् अप्राकृतदेशगमनासं-
भवादिहैव यावत्प्रलयं स्थितिः । करणविधुरैरन्यैः परिग्रहो वा ।
कर्मेन्द्रियाणां शरीरनाशान्नाश इति पक्षस्तु भाष्याविरोधेन नेयः ।
एतेन पुरुषेन्द्रियं, स्त्रीन्द्रियम्, एकेन्द्रियवादः, त्वगिन्द्रियैकत्वस्वी-
कार इत्यादिविमतपक्षा निरस्ताः ।

राजसाहङ्कारसहकृताद् भूतादिसंज्ञकतामसाहङ्काराच्छब्दादि-
पञ्च तन्मात्राणि आकाशादिपञ्च महाभूतानि चोत्पद्यन्ते । भूता-
नामव्यवहितसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रम् । तदेव भूतोपादा-
नम् । विशिष्टशब्दादिविषयाधिकरणं भूतम् । तन्मात्राणि शब्दत-
न्मात्रं स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति प-
ञ्चभूतानि च । यथा आकाशवायुतेजआपःपृथिवीभेदात् । तत्र ता-
मसाहङ्काराकाशयोर्मध्यमाऽवस्थाविशिष्टं द्रव्यं शब्दतन्मात्रम् । क्षीर-
दध्नोरन्तराले कलिलपरिणामवत् । तस्मादाकाशो जायते । अस्पर्श-
वत्त्वे सति विशिष्टशब्दाधारत्वं श्रोत्राप्यायितृत्वं च आकाशलक्ष-
णमिति । स च शब्दमात्रगुणकः । अवकाशहेतुः । नीलं नभ
इति प्रतीते रूपवाँश्च । एतेनाकाशस्य अजन्यत्वनिरासः । सूर्यप-
रिस्पन्दादिभिराकाशस्यैव प्राच्यादिव्यवहारोपपत्तौ दिगिति न
पृथग् द्रव्यकल्पनम् । दिक्सृष्टिस्तु अन्तरिक्षादिसृष्टिवदुपपद्यते ।
आकाशात् स्पर्शतन्मात्रम् । आकाशवाय्वोर्मध्यमावस्थाविशिष्ट-
द्रव्यं स्पर्शतन्मात्रम् । तस्माद्वायुः । विशिष्टस्पर्शवत्त्वे सति रूपशू-
न्यत्वम् । अस्मदादिस्पर्शनैकेन्द्रियग्राह्यद्रव्यत्वम् । अनुष्णाशीत-
विशिष्टस्पर्शवत्त्वे सति गन्धशून्यत्वमित्यादिकं वायोर्लक्षणम् । त-

स्मिन्नानासलिलातपकुसुमाद्यवयवयोगाच्छीतोष्णसौरभादिप्रतीतिः। अत एव तदवयवानां सूक्ष्माणां योगाच्छीतो वायुरुष्णो वायुः, सुरभिरिति व्यपदेशः । स च त्वगिन्द्रियाप्यायकत्वेन उपकरोति। तस्य शब्दस्पर्शौ गुणौ। तत्र शरीरधारणादिहेतुर्वायुविशेषः प्राणादिसंज्ञकः पञ्चप्रकारः । प्राणापानव्यानोदानसमानभेदात् । हृदि प्राणो, गुदेऽपानः, सर्वशरीरगो व्यानः, कण्ठे उदानो, नाभिदेशे समान इति । जङ्गमेष्विव स्थावरेषु च प्राणसंबन्धस्तुल्य एव । स च स्पार्शनप्रत्यक्षः । एतेन अनुमेयवादनिरासः । वायुतेजसोर्मध्यमावस्थाविशिष्टं द्रव्यं रूपतन्मात्रम् । तस्मात् तेजः । उष्णस्पर्शवत्त्वभास्वररूपवत्त्वादिकं तु तेजसो लक्षणम् । तस्य बहिः पचनादिहेतुत्वम् अग्निसूर्यात्मना । अन्तर्वैश्वानरसंज्ञकजाठराग्निरूपेण । दिवाभीतादिव्यतिरिक्तानां चाक्षुषज्ञाने आलोकादिरूपेण सहकारी भवति । तच्चतुर्धा भौमदिव्यौदर्याकरजभेदात् । तत्र पार्थिवमात्रेन्धनं तेजो भौमम् । तद् दीपादि । जलमात्रेन्धनं दिव्यं सूर्यादि । पार्थिवजलेन्धनम् औदर्यम्। तज्जाठरम् । निरिन्धनं तेज आकरजं स्वर्णादि । स्वर्णस्य द्रव्यान्तरसंसर्गादुष्णस्पर्शाभावः । पुनः सामान्येन, प्रभा प्रभावाँश्चेति विभक्त, आवरणसदसद्भावाधीनसंकोचविकाशः । प्रसारितेजोविशेषः प्रभा । सा च प्रभावाद्भिः सहोत्पद्यते सह नश्यति । द्रव्यरूपा गुणभूता सावयवा च । अनेन प्रभायाः केवलगुणत्वमतनिरासः । प्रभाविशिष्टं तेजः प्रभावच्चचतुर्विधमिति प्रतिपादितम् । तत्तेजः शब्दस्पर्शरूपगुणवच्च । तेजः सलिलयोर्मध्यमावस्थाविशिष्टं द्रव्यं रसतन्मात्रम् । तस्मादापः । शीतस्पर्शवत्त्वं, निर्गन्धत्वे सति विशिष्टरसवत्त्वम् । इत्यादि अपां लक्षणम् । तासां शुक्लमधुरशीतैकस्वभावानाम् आश्रयादिसंसर्गभेदाद् रूपरसस्पर्शवैचित्र्यारोपः । ताः समुद्रसरिद्ह्रदा-

दिरूपेण बहुप्रकाराः, शब्दस्पर्शरूपरसवत्त्वश्च, सेचनपिण्डीकरणादिहेतवः । अप्पृथिव्योर्मध्यमावस्थाविशिष्टं द्रव्यं गन्धतन्मात्रं, तस्मात् पृथिवी । विशिष्टगन्धवत्त्वं, रसवत्त्वे सति विशिष्टस्पर्शवत्त्वमित्यादि पृथिवीलक्षणम् । सा सुरभिर्मधुरा कृष्णादिरूपा च । अनुष्णाशीतस्पर्शवती, पाकजभेदात्तु विचित्रवर्णा विचित्ररसा च । अस्याश्च मनोघ्राणाप्यायकत्वेन उपकारकत्वम् । मृत्पाषाणाश्चौषधादिबहुप्रकारवती शब्दस्पर्शरूपरसगन्धगुणिका धारणहेतुश्च । तमसः पृथिव्यामन्तर्भावस्तद्गुणत्वात् तदन्यस्थान्तरत्वाद्वा । अत एव आलोकाभावमात्रं द्रव्यान्तरं वा इत्यादिपक्षा निरस्ताः । भूतेषु सर्वत्र पञ्चीकरणप्रक्रियया शब्दादीनां गुणानामुपलम्भः ।

पञ्चीकरणप्रक्रिया तु—भगवान् भूतानि सृष्ट्वा एकैकमेव भूतं द्विधाकृत्य द्वयोर्भागयोः स्वभागमेकं निधाय भागान्तरं च चतुर्द्धाकृत्य ताँश्चतुर्भागान् भूतान्तरेषु चतुर्षु योजयति । एवं सर्वेषु भूतेषु क्रियमाणेषु एकैकस्य भूतस्य अर्द्धं स्वभागोऽर्द्धान्तरं चतुर्णां भूतानां भागसमुच्चय इति भवति । यथा च स्वभागस्य भूयस्त्वात् परभागस्यालपीयस्त्वाच्च पृथिव्यादिव्यपदेशः । वेदे त्रिवृत्करणोपदेशस्तु पञ्चीकरणस्याप्युपलक्षणम् । भूतैः साकं महदहङ्कारौ मिलित्वा सप्तीकरणमित्यप्याहुः ।

एतेषु चतुर्विंशतिसंख्याकेषु, पञ्चभूतानि, प्रकृतिमहदहंकाराश्च शरीरोपादानानि । एकादशेन्द्रियाणि प्रत्येकमसंख्यातानि प्रतिपुरुषं भिन्नानि आभरणार्पितरत्नानीव शरीरमाक्रम्य तिष्ठन्ति । शरीरं नाम चेतनं प्रति आधेयत्वविधेयत्वशेषत्वानियमैरपृथक्सिद्धो द्रव्यविशेष इत्येकं लक्षणम् । नियमेन यदाधेयं, नियमेन यद्विधेयं, नियमेन यच्छेषमिति लक्षणत्रयं वा योज्यम् । ईश्वरतज्ज्ञानव्यतिरिक्तं द्रव्यं शरीरमिति वा तटस्थलक्षणम् । एतेन चेष्टाश्रयः

शरीरम्, इन्द्रियाश्रयः शरीरं, भोगायतनं शरीरं, शिरःपाणिपादादिमयं शरीमित्यादीनि परोक्तानि शरीरलक्षणानि निरस्तानि ।

शरीरं द्विविधं नित्यमनित्यमिति । तत्र नित्यं, त्रिगुणद्रव्यकालजीवशुभाश्रयादिकम् । ईश्वरशरीरं नित्यं, सूरिणां च स्वाभाविकगरुडभुजगादिरूपम् । अनित्यं द्विविधम् । अकर्मकृतं कर्मकृतं चेति । प्रथममीश्वरस्य महदादिरूपम् । तथा अनन्तगरुडादीनां मुक्तानां च इच्छागृहीतं तत्तद् रूपम् । कर्मकृतमपि द्विविधम् । स्वसङ्कल्पसहकृतकर्मकृतं, केवलकर्मकृतं चेति । पूर्वं महतां सौभरिप्रभृतीनाम् । उत्तरं चान्येषाम् । पुनः सामान्यतो द्विविधं, स्थावरजङ्गमभेदात् । स्थावराः शिलावृक्षगुल्मलतादयः । जङ्गमश्चतुर्द्धा, देवमनुष्यतिर्यङ्नारकिभेदात् । उद्भिज्जस्वेदजजरायुजाण्डजादिभेदा अपि विभागजधर्म्माः । अयोनिजशरीराण्यपि सन्ति । एवं पञ्चीकृतानामेवाण्डोत्पादकत्वम् । अण्डोत्पादनात् पूर्वसृष्टिः समष्टिसृष्टिरनन्तरसृष्टिर्व्यष्टिसृष्टिः । महदादीनामुत्पत्तिर्नाम तालीपलाशताटङ्कन्यायेन अवस्थान्तरापत्तिरेव । सेनावनराश्यादिव्यवहारवत् पूर्वापरावस्थाविशेषसम्बन्धमात्रेण कार्य्यकारणभेदव्यवहारः। तत्र पूर्वावस्थाप्रहाणेन विजातीयावस्थाप्राप्तौ तत्त्वान्तरव्यपदेशः । पृथिवीपर्य्यन्त एव । इत्थं प्रकृतिमहदहङ्कारैकादशेन्द्रियतन्मात्रपञ्चकभूतपञ्चकविभागेन चतुर्विंशति तत्त्वानि वर्णितानि । एतेन न्यूनाधिकसंख्यातत्त्ववादिनो, बाह्याः पाशुपताश्च निरस्ताः । परमाणुकारणत्ववादिनोऽपि निरस्ताः । प्रकृत्यादय ईश्वरस्य जीवस्य च भोग्यभोगोपकरणं भोगस्थानानि च भवन्ति । भोग्यं विषयाः, भोगोपकरणं चक्षुरादिककरणानि भोगस्थानानि चतुर्दशभुवनान्तर्वर्त्यण्डजातानि । अण्डं नाम कपित्थक-फलाकारं पञ्चीकृतपञ्चभूतारब्धं प्राकृतद्रव्यम् ।

तद्यथा पद्माकारा भूः। कर्णिकाकारो मेरुः। मेरोर्दक्षिणतो भारतकिम्पुरुषहरिवर्षाणि त्रीणि। उत्तरतस्तु रम्यकहिरण्यककुरुवर्षाणि त्रीणि। पुरतो भद्राश्ववर्षं, पश्चात् केतुमालाख्यं वर्षम्। मध्ये इलावृतम्। एवं नववर्षयुक्तं जम्बूद्वीपं लक्षयोजनविस्तीर्णं समपरिमाणेन लवणसागरेणावृतम्। स सिन्धुर्द्विगुणेन सप्तवर्षात्मकेन प्लक्षद्वीपेन वेष्टितः। सोऽपि इक्षुसमुद्रेण। सोऽब्धिः शाल्मलिद्वीपेन। स पुनः सुरासमुद्रेण। स कुशद्वीपेन। स सर्पिःसमुद्रेण। सोऽपि क्रौञ्चद्वीपेन। स दध्यर्णवेन। सोऽपि शाकद्वीपेन वेष्टितः। स ह क्षीरार्णवेन। स वर्षद्वयविभाजकवलयाकारमानसोत्तरपर्वतसहितेन पुष्करद्वीपेन, स शुद्धजलार्णवेन। एवं द्वीपानामुत्तरोत्तरद्वैगुण्यं द्रष्टव्यम्। सप्तद्वीपात्मकोऽयं द्विगुणीकृतया काञ्चनभूम्या वृतः। काञ्चनभूमिस्तु लोकालोकपर्वतेन। पर्वतस्त्वन्धतमसा। तदन्धतमो गर्भोदकेन। ततोऽण्डकटाहः। एवं भूमेरधः—अतलवितलरसातलतलातलमहातलसुतलपातालभेदात् सप्त लोकाः। अधो नरकाः। ते च पापकर्मणां पापानुभवभूमयो रौरवाद्या मुख्यतया एकविंशतिप्रभेदाः। ततो गर्भोदकम्। अनन्तरमण्डकटाहः। एवं भूमेरुपरि लक्षयोजनात् सूर्य्यमण्डलम्। तदेव भुवर्लोकः। तदुपरि चन्द्रमण्डलम्। तस्मादुपरि नक्षत्रबुधशुक्राऽङ्गारकबृहस्पतिशनिसप्तर्षिमण्डलानि। तदुपरि ध्रुवः। सूर्यमण्डलमारभ्य ध्रुवलोकपर्य्यन्तं स्वर्लोकः। चतुर्लक्षादुपरि कोटियोजनोच्छ्रायो महर्लोकः। तस्माद् द्विगुणो जनलोकः। ततश्चतुर्गुणस्तपोलोकः। तस्माद् द्वादशकोट्युच्छ्रायः सत्यलोकः। ततस्तमो गर्भोदकम्। अण्डकटाहश्च। एवं तिर्यगूर्ध्वप्रमाणेन पञ्चाशत्कोटियोजनत्वं भूमेरुक्तं भवति। शतकोटियोजनविस्तीर्णवादो मानभेदेन। अण्डकटाहस्तु कोटियोजनोच्छ्रायः। तदण्डं दशोत्तरावर-

णवृतम् । एतादृशानि अण्डानि अनन्तानि जलबुद्बुदानीव युगपदीश्वरसृष्टानि । ईश्वरस्य चतुर्मुखपर्य्यन्ता सृष्टिरद्वारिका, तदनन्तरं सद्वारिकेति विवेकः । विस्तरस्तु पुराणरत्नादिषु द्रष्टव्यः । इति प्रकृतिर्निरूपिता ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्य्यप्रथमकृपापात्रेण श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां प्रकृतिनिरूपणं नाम चतुर्थोऽवतारः ॥ ४ ॥



अथाऽचिद्विशेषः कालो निरूप्यते। कालो नाम गुणत्रयरहितो जडद्रव्यविशेषः। स च नित्यो विभुश्च। भूतभविष्यद्वर्तमानभेदेन त्रिविधो युगपत्क्षिप्रचिरादिव्यपदेशहेतुः। निमेषकाष्ठाकलामुहूर्तदिवसपक्षमासर्त्वयनवत्सरादिव्यपदेशहेतुश्च। मनुष्यमानेन मासः पितॄणां दिनम्। तेषाममावास्या तु मध्याह्नम्। मनुष्यमानेन वत्सरो देवानां दिनम्। तेषामुत्तरायणमहः। दक्षिणायनं रात्रिः। एवं देवमानेन द्वादशवर्षसहस्रसंख्याकं चतुर्युगमित्युच्यते। तत्र चतुःसहस्रवर्षसंख्याकं कृतयुगम्। तत्र पूर्णो धर्मः। त्रिसहस्रवर्षसंख्याकं त्रिपाद्धर्मवत् त्रेतायुगम्। द्विसहस्रवर्षपरिमितं सार्द्धधर्मवद् द्वापरम्। सहस्रवर्षसंख्याकम् एकपादधर्मसंयुक्तं कलियुगम्। एतेषां संधिर्द्विसहस्रसंख्याकः। एवं, चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते इत्युक्तरीत्या चतुर्युगसहस्राणि ब्रह्मणो दिवसमात्रप्रमाणकमेव। एवं रात्रिरपि। ब्रह्मणोऽह्नि चतुर्दश मनवो जायन्ते। इन्द्रा अपि तथैव। तथा सप्त ऋषयश्च। एकैकमनोरेकसप्ततिचतुर्युगपरिमाणकालः। एवं ब्रह्ममानेन ब्रह्मणः शतवर्षजीवित्वम्। एतत् सर्वं कालाधीनम्। एवं नित्यनैमित्तिकप्राकृताः प्रलया अपि कालाधीनाः। कालस्य स्वकार्यं प्रति स्वस्य उपादानत्वम्। अखण्डः कालो नित्यः, कार्य्यः पुनरनित्यः। एवं भूतः काल ईश्वरस्य क्रीडापरिकरो भवति। लीलाविभूतौ ईश्वरः कालाधीन एव कार्यं करोति। नित्यविभूतौ तु कालस्य विद्यमानत्वेऽपि तस्य न स्वातन्त्र्यम्। केचित्तु तत्र कालो नास्तीति वदन्ति। केचित्तु षडिन्द्रियवेद्यः काल इत्यप्याहुः। तेन अनुमेयत्वादनिरासः। इति कालो निरूपितः॥

इति श्रीमन्महाचार्य्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां कालनिरूपणं नाम पञ्चमोऽवतारः॥ ५ ॥

अथ नित्यविभूतिर्निरूप्यते । शुद्धसत्त्वधर्मभूतज्ञानजीवेश्वर-साधारणं लक्षणमजडत्वम् । अजडत्वं नाम स्वयंप्रकाशत्वम् । तत्र शुद्धसत्त्वधर्मभूतज्ञानसाधारणं लक्षणम् । पराक्त्वे सत्यऽजडत्वम् । तत्तु स्वयंप्रकाशत्वे सति परस्मा एव भासमानत्वम् । शुद्धसत्त्वं नाम त्रिगुणद्रव्यव्यतिरिक्तत्वे सति सत्त्ववत्त्वं, निःशेषाविद्यानिवृत्तिदेशविजातीयान्यत्वम् । सा विभूतिरूर्ध्वप्रदेशे अनन्ता, अधः प्रदेशे परिच्छिन्ना अचेतना स्वयंप्रकाशा च । आनन्दावहत्वादानन्दनामिका पञ्चोपनिषन्मन्त्रप्रतिपाद्यतया पञ्चोपनिषदात्मिका । अप्राकृतपञ्चशक्तिमत्तया पञ्चशक्तिमयीति निगद्यते । सा विभूतिरीश्वरस्य नित्यानां मुक्तानां च ईश्वरसंकल्पाद् भोग्यभोगोपकरणभोगस्थानरूपा च भवति । भोग्यमीश्वरशरीरादि । भोगोपकरणं चन्दनकुसुमवस्त्रभूषणायुधादीनि । भोगस्थानं तु गोपुरप्राकारमण्डपविमानोद्यानपद्मिन्यादिकम् । तत्रेश्वरस्य नित्यानां च शरीराणि भगवन्नित्येच्छासिद्धानि मुक्तानां शरीराणि । तेषां पित्रादिसृष्टिर्युगपदनेकशरीरपरिग्रहा इत्यादीनि भगवत्संकल्पादेव भवन्ति । भगवतो व्यूहविभवार्चावतारशरीराण्यप्यऽप्राकृतमयानि । अर्चावतारेषु प्रतिष्ठानन्तरं प्रसादोन्मुखेश्वरसंकल्पाधीनम् अप्राकृतं शरीरमत्राविर्भवति । प्राकृताप्राकृतसंसर्गः कथमिति न शङ्कनीयम् । रामकृष्णाद्यवतारशरीरवदिति प्रमाणानुसारेण परिहारो द्रष्टव्यः । मुक्तानां शरीरपरिग्रहस्तु वसन्तोत्सवत्रेषपरिग्रहादिवत् स्वामिनः कैङ्कर्यमेव । ईश्वरशरीरस्य षाड्गुण्यमिति व्यवहारः षाड्गुण्यप्रकाशकत्वात् । नित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनमार्दवार्जवादयो दिव्यमङ्गलविग्रहगुणाः । तस्य व्यापकत्वं गीतादिषु प्रसिद्धम् । मुक्तस्य शरीरं नास्तीति वचनं तु कर्मकृतशरीराभावपरम् । त-

न्त्रस्येन्द्रियाणां नित्यत्वात्। अत एव कार्यकारणभावाभावात् प्राकृतवन्न तत्त्वान्तरव्यपदेशः। एतेन तत्र शरीरेन्द्रियादिकं नास्तीति मतनिरासः। तमसः परस्तादित्युक्त्या प्रकृत्येकदेशत्वादिमतनिरासः। अप्राकृतशब्दस्पर्शरूपरसगन्धाश्रयत्वादाकाशादिव्यावृत्तिः। ज्ञानात्मकत्वप्रतिपादनाज्जडत्वमतनिरासः। भगवतोऽप्राकृतदिव्यमङ्गलविग्रहस्तु अस्त्रभूषणाध्यायोक्तसर्वोपाश्रयः। तद्यथा पुरुषस्य कौस्तुभाकारत्वं, प्रकृतेः श्रीवत्सरूपत्वं, महतो गदारूपत्वं, सात्त्विकाहङ्कारस्य शङ्खरूपत्वं, तामसाहङ्कारस्य शार्ङ्गत्वं, ज्ञानस्य खड्गरूपत्वम्, अज्ञानस्य तदावरकत्वं, मनसश्चक्रत्वं, कर्मज्ञानेन्द्रियाणां शररूपत्वं, सूक्ष्मस्थूलभूतानां वनमालात्वम् ॥ "चेतश्चक्रमिति चेतना शरमतिस्तत्संहतिर्मालिका भूतानि स्वगुणैरहङ्कृतियुगं शङ्खेन शार्ङ्गायते ॥ बाणाः खानि दशापि कौस्तुभमणिर्जीवः प्रधानं पुनः श्रीवत्सं कमलापतेस्तव गदामाहुर्महान्तं बुधाः" ॥ १ ॥ इति संग्रहोक्तं पद्यमनुसन्धेयम्। सा विभूतिरामोदप्रमोदसंमोदवैकुण्ठाख्यरूपेण चतुर्विधा, पुनरनन्ता च। त्रिपाद्विभूतिपरमपदपरमव्योमपरमाकाशाऽमृतनाकाऽप्राकृतलोकाऽऽनन्दलोकवैकुण्ठाऽयोध्यादिशब्दवाच्या। एतस्यां विभूतौ द्वादशावरणोपेतम् अनेकगोपुरप्राकारैरावृतं वैकुण्ठं नाम नगरम्। तत्रानन्दनामकं दिव्याऽऽलयम्। तदन्तः, रत्नमयानेकस्तम्भसहस्रैर्विरचिता महामणिमण्डपाख्या सभा। तस्यां सहस्रफणामणितेजोविराजितोऽनन्तः। तस्मिन् धर्मादिमयदिव्यसिंहासनम्। तदुपरि चामरहस्तैर्विमलादिभिः सेवितमष्टदलात्मकं पद्मम्। तदुपरि प्रकृष्टविज्ञानधामा शेषः। तदुपरि वाचः परमद्भुतम्। एवं नित्यविभूतिः संग्रहेण प्रदर्शिता ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां नित्यविभूतिनिरूपणं नाम षष्ठोऽवतारः ॥ ६ ॥

अथ क्रमप्राप्तं धर्मभूतज्ञानं निरूप्यते। स्वयंप्रकाशाचेतनद्रव्यत्वे सति विषयित्वं, विभुत्वे सति प्रभावद्द्रव्यगुणात्मकत्वम्, अर्थप्रकाशो बुद्धिरिति तल्लक्षणम् । तद्धर्मभूतज्ञानमीश्वरस्य नित्यानां च सर्वदा नित्यमेव विभु च । बद्धानां तिरोहितमेव। मुक्तानांपूर्वं तिरोहितम्, अनन्तरमाविर्भूतम्। ज्ञानस्य नित्यत्वे, ज्ञानमुत्पन्नम्, ज्ञानं नष्टमिति व्यवहारः कथमितिचेन्न। ज्ञानस्य संकोचविकाशावस्थामादाय तत्संभवात् । दृतेः पात्राद्यथा उदकं क्षरति तथा ज्ञानमपि इन्द्रियद्वारा निःसृत्य अर्थेन संनिकृष्यते। अहिकुण्डलवत् संकोचविकाशौ सर्वज्ञानं स्वत एव प्रमाणं स्वप्रकाशं च । विप्रतिपन्ना संवित् स्वगतव्यवहारं प्रति स्वाधीनकिञ्चित्करा स्वस्वजातीयसंबन्धानपेक्षव्यवहारहेतुत्वात् । अर्थेन्द्रियदीपादिवत् । न च चक्षुरालोकयोः सजातीयत्वम् आहङ्कारिकतैजसभेदाद्भेदः । अनेन ज्ञानस्य क्षणिकत्वं त्रिक्षणावस्थायित्वं प्रातिभासिकवद् व्यवहारस्य मिथ्यात्वं, परतः प्रामाण्यं ज्ञानस्यैव आत्मत्वमित्यादिपक्षा निरस्ताः । स्तम्भः स्तम्भ इत्यादिधारावाहिकज्ञानं तु एकमेव । ननु आगमबलाज्ज्ञानस्य नित्यत्वाङ्गीकारे कथं जागरसुषुप्त्यादिभेदसिद्धिरिति चेन्न । यथा दाहकस्य वह्नेर्दाह्यसन्निधौ मण्यादिप्रतिबन्धके दाहाभावस्तद्वज्ज्ञानस्य तिरोधायकतमोविशेषसन्निधानासन्निधानाभ्यां स्वापादिसिद्धिः। पुँस्त्वादिवच्च। पुँस्त्वादिकं बाल्ये तिरोहितं यौवने आविर्भवति। यो यदाश्रितस्वभावः स तस्य गुण इति लक्षणलक्षितत्वाज्ज्ञानं गुणः विशेषणादिवत् । यतः संकोचविकाशावस्थावत्। अतो द्रव्यमपि भवति । आत्मगुणभूतस्य ज्ञानस्य द्रव्यत्वं कथमिति न शङ्कनीयम् । प्रभावद् एकस्यैव द्रव्यत्वगुणत्वयोर्विरोधाभावात् । अवस्थाश्रयो द्रव्यमिति द्रव्यलक्षणं स्वाश्रयादन्यत्र वर्तमानत्वमपि प्रभावदेवोपपद्यते । प्रयोगश्च– गुणभूता बुद्धिर्द्रव्यं, प्रसरणादिम-

त्त्वात्। प्रभावत् । ज्ञानं द्रव्यं, संयोगाददृष्टान्यत्वे सति भावनाकारणत्वादात्मवदिति । मुक्तज्ञानस्य युगपदनन्तदेहसंयोगो नयनसूर्यादितेजोवत् संभवति । ज्ञानं मतिः प्रज्ञा संविद् धिषणा धीर्मनीषा शेमुषी मेधा बुद्धिरित्येवमादयः शब्दा ज्ञानपर्यायाः। बुद्धिरेवोपाधिभेदात् सुखदुःखेच्छाद्वेषप्रयत्नरूपा। सुखादिजनकज्ञानातिरेके प्रमाणाभावात्। इच्छामि द्वेष्मीति व्यवहारस्य स्मरामीत्यादिवज्ज्ञानविशेषेणैवोपपत्तेः। ननु कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्भीर्धीरित्येतत् सर्वं मन एव इति उक्तं ज्ञानरूपत्वं कथमिति चेन्न। ज्ञानस्य मनस्सहकारित्वनियमान्मन एवेत्युपचारादुक्तमिति न विरोधः। एवं प्रत्यक्षानुमानागमस्मृतिसंशयविपर्य्ययभ्रमाविवेकव्यवसायमोहरागद्वेषमदमात्सर्य्यधैर्यचापलदम्भलोभक्रोधदर्प्पस्तम्भद्रोहाभिनिवेशानिर्वेदानन्दाऽऽदयः। सुमतिर्दुर्मतिः, सुप्रीतिः, तुष्टिः, उन्नतिः, शान्तिः, कान्तिः, विरक्तिः, रतिः, मैत्री, दया, मुमुक्षा, लज्जा, तितिक्षा, विचारणा, जिगीषा, मुदिता, क्षमा, चिकीर्षा, जुगुप्सा, भावना, कुहना, असूया, जिघांसा, तृष्णा, दुराशा, वासना, दुर्वासना, चर्चा, श्रद्धा, भक्तिः, प्रपत्तिरित्येवमादयश्च जीवगुणा अनन्ता धर्मभूतज्ञानाऽवस्थाविशेषा एव। एवं ज्ञानशक्तिबलैश्वर्य्यतेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दधैर्यसाम्यकारुण्यमाधुर्य्यगांभीर्य्यौदार्यस्थैर्यपराक्रमादयो भगवतोऽनन्तकल्याणगुणाः । ज्ञानशक्त्योर्विततिभूताः । तत्र ज्ञानं नाम सर्वसाक्षात्काररूपं, शक्तिरघटितघटनासामर्थ्यं, बलं धारणसामर्थ्यम्, ऐश्वर्य्यं नियमनसामर्थ्यं, वीर्य्यमविकारित्वं, तेजः पराभिभवनसामर्थ्यम्। बलं धारणसामर्थ्यम्। महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वं सौशील्यं, वात्सल्यं दोषेऽपि गुणत्वबुद्धिर्दोषाऽदर्शित्वं वा। आश्रितविरहासहत्वं मार्दवं, मनोवाक्का-

यैकरूप्यमार्जवं, स्वसत्तानपेक्षतद्रक्षापरत्वं सौहार्दम्। जन्मज्ञानवृत्त-गुणाद्यनपेक्षया सर्वैराश्रयणीयत्वं साम्यम्। आश्रितदोषगोपनं चातुर्य्यम्। अकम्पनीयत्वं स्थैर्य्यम्। अभग्नप्रातिज्ञत्वं धैर्य्यम्, परबल-प्रवेशनसामर्थ्यं शौर्य्यम्। तन्निराकरणं पराक्रमः। स्वप्रयोजनमन-पेक्ष्य परदुःखनिराचिकीर्षा दया। परदुःखदुःखित्वं वा। क्षीरवद् उपाध्यभावेऽपि स्वादुत्वं माधुर्यम्। भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं गाम्भीर्यम्। प्रभुत्वं दत्वाऽप्यतृप्तत्वमौदार्यम्। एवं वदान्य इत्यादावप्यूह्यम्। ज्ञानविशेषभूतयोर्भक्तिप्रपत्त्योः स्वरूपं किञ्चिदुच्यते। भक्तिप्रपत्तिभ्यां प्रसन्न ईश्वर एव मोक्षं ददाति। अतस्तयोरेव मोक्षोपायत्वम्। मोक्षोपायत्वेन उक्तानां कर्म्मयोगज्ञानयोगप्रभृतीनां भक्तिद्वारैव साधनत्वम्। कर्म्मयोगो नाम उपदेशाज्जीवपरयाथात्म्यज्ञानवता शक्त्यनुसारेण फलसङ्गर-हिताऽनिषिद्धकाम्यनित्यनैमित्तिकरूपपरिगृहीतकर्मविशेषः। स तु देवार्च्चनातपस्तीर्थदानयज्ञादिभेदभिन्नः। अयं तु जीवगतकल्मषा-पनयनद्वारा ज्ञानयोगमुत्पाद्य तद्द्वारा साक्षाद्वा भक्त्युत्पादको भवति। ज्ञानयोगो नाम कर्मयोगान्निर्मलान्तःकरणस्य ईश्वरशेष-त्वेन प्रकृतिवियुक्तस्वात्मचिन्ताविशेषः।

एतस्य साक्षाद्भक्त्युपयोगित्वमेवं साधनान्तराणामपि भक्त्युपयो-गित्वमूह्यम्। भक्तियोगो नाम, यमनियमासनप्राणायामप्रत्याहार-ध्यानधारणासमाधिरूपाष्टाङ्गवाँस्तैलधारावदविच्छिन्नस्मृतिसन्तान-रूपः। स च विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षरू-पसाधनसप्तकजन्यः। तत्र विवेको नाम जात्याश्रयनिमित्ताददुष्टाद-न्नात्कायशुद्धिः। विमोकः कामानभिष्वङ्गः। अभ्यासः पुनः पुन-रालम्बनसंशीलनं, शक्तितः पञ्चमहायज्ञाद्यनुष्ठानं क्रिया। कल्या-णानि सत्यार्जवदयादानाऽहिंसादीनि। अनवसादो दैन्याभावः।

अनुद्धर्षस्तुष्ट्यभावः । अतिसन्तोषश्च विरोधीत्यर्थः । एवं साधन-सप्तकाऽनुगृहीता भक्तिर्दर्शनसमानाकारा अन्तिमप्रत्ययाऽवधिका च भवति । स चान्तिमप्रत्यय एतच्छरीरावसाने वा, शरीरान्तराव-साने वा भवति ।

वेदनध्यानोपासनादिशब्दवाच्या भक्तिः परभक्तिपरमज्ञान-परमभक्तिरूपा क्रिया क्रमवती प्रत्यङ्गिका च । सा द्विविधा । साधन-भक्तिफलभक्तिभेदात् । उक्तसाधनजन्या साधनभक्तिः । फलभक्तिस्तु ईश्वरकृपाजन्या पराङ्कुशनाथादिनिष्ठा । मद्भक्तजनवात्सल्य-मित्यादिषु स्तुतिनमस्कारादिषु च भक्तिशब्दप्रयोग औपचारिकः । ननु वेदान्तेषु श्रवणमननयोरपि विधानात् कथं ध्यानमेव विधी-यत इतिचेदुच्यते । अधीतसाङ्गवेदः पुरुषः प्रयोजनवदर्थावबोधि-त्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तते इति श्रवणस्य प्राप्तत्वादनुवादः । श्रवणप्रतिष्ठार्थत्वान्मननस्याप्यनुवादः । तस्माद् ध्यानमेव विधीयते इति न विरोधः । ध्यानवाच्या भक्तिर्विद्या-भेदाद् बहुविधाः । काश्चिद् विद्या उच्यन्ते—अन्तरिक्षविद्या, अ-न्तरादित्यविद्या, दहरविद्या, भूमविद्या, सद्विद्या, मधुविद्या, उप-कोशलविद्या, शाण्डिल्यविद्या, उद्गीथविद्या, पुरुषविद्या, प्रतर्दन-विद्या, वैश्वानरविद्या, इत्यादिका ब्रह्मविद्या । न्यासविद्या प्र-पत्तिः । प्रपत्तिर्नाम, आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् * रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा * आत्मनिक्षेपकार्प-ण्यमित्यङ्गपञ्चकयुक्ता एतद्देहावसाने मोक्षप्रदाऽसकृत्कर्तव्या । न्यासः शरणागतिरित्यादिशब्दवेद्या ज्ञानविशेषरूपा एषा प्रपत्तिर्गुरु-मुखाद्रहस्यशास्त्रेषु संप्रदायतया वेदितव्येति इह बालबोधार्थं प्रवृत्ते ग्रन्थे न प्रकाश्येति विरम्यते । भक्तिप्रपत्त्योरेव मोक्षसाधनत्वेन स्वीकारात् परोक्तोपायनिरासः । यथा वेदबाह्यानां मध्ये केषा-

श्विन्मते देहातिरिक्तात्मनोऽनङ्गीकारान्मोक्षप्रवृत्तिरेव न संभवति। अन्येषां मते ज्ञानस्य क्षणिकत्वात् । तस्यैवात्मत्वात् कस्य प्रवृत्तिः । सान्तानिस्येति चेन्न । अन्यं प्रति अन्येन यत्नो न कर्तव्य इति न प्रवृत्तिः।अपरेषां मते धर्माधर्मादिसप्तभङ्गीरीत्या अनैकान्तवादान्न प्रवृत्तिः । वैशेषिकादिपक्षे पाषणकल्पे मोक्षे प्रवृत्तिः कस्यापि न संभवति । सांख्यादिपक्षेषु ईश्वरानङ्गीकारात् पुरुषस्य प्रकृतेर्वा मोक्ष इति संशयान्न प्रवृत्तिः । मायिकमते व्यावहारिकस्य वाक्यस्य पारमार्थिकाभेदज्ञानाजनकत्वान्न प्रवृत्तिः । भास्करयादवोक्तकर्मज्ञानसमुच्चयवादोऽपि उक्तादेव निरस्तः । शैवमते तु पशुपतेः प्राप्यत्वस्वीकाराद्वेदविरुद्धभस्मधारणादेः साधनत्वेन स्वीकाराच्च तन्निरासः । एवं मतिर्निरूपिता ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां बुद्धिनिरूपणं नाम सप्तमोऽवतारः ॥ ७ ॥



अथ जीवो निरूप्यते। प्रत्यक्त्वचेतनत्वात्मत्वकर्तृत्वादीनि ई-श्वरजीवसाधारणानि लक्षणानि। प्रत्यक्त्वं नाम स्वयमेव स्वस्मै भासमानत्वम्। चेतनत्वं ज्ञानाश्रयत्वम्। आत्मत्वं शरीरप्रतिसंबन्धित्वम्। कर्तृत्वं संकल्पज्ञानाश्रयत्वम्। एवं सामान्यलक्षणलक्षितस्य विशेषलक्षणान्युच्यन्ते। अणुत्वे सति चेतनत्वं, स्वतः शेषत्वे सति चेतनत्वम्। एवम् आधेयत्वविधेयत्वपराधीनकर्तृत्वपरतन्त्रत्वादिकमूह्यम्। स देहेन्द्रियमनःप्राणादिभ्यो विलक्षणः। यथा मम शरीरमिति प्रतीत्या देहाद् व्यावृत्तः। चक्षुषा पश्यामि, श्रोत्रेण शृणोमि, वाचा वदामि इत्यादिप्रत्ययाद् बाह्येन्द्रियेभ्यो व्यावृत्तः। मनसा जानामीति मनसो ज्ञानकरणत्वप्रतीतेः। मम प्राण इति व्यतिरेकोक्तेः। जानाम्यहमिति ज्ञानाच्च मनःप्राणज्ञानेभ्यो व्यावृत्तः। स च अणुपरिमाणः। उत्क्रान्त्यादेः श्रवणात्। प्रमाणानुसाराच्च। अणुत्वे युगपदनेकविषयानुभवः कथमिति न शङ्कनीयम्। धर्मभूतज्ञानव्याप्त्या उपपत्तेः॥ एतेनैव सौभरिप्रभृतीनां युगपदनेकशरीरपरिग्रहोऽपि संभवति। स च नित्यः। पूर्वानुभूतार्थप्रतिसन्धानात्। नित्यश्चेज्जीव उत्पन्नो, जीवो नष्ट इति प्रतीतिः कथमिति चेन्न। जीवस्य देहसंबन्ध उत्पत्तिस्तद्वियोगो नाश इति प्रतिपादनात्। जीवस्वरूपं नित्यमेव। स च प्रतिशरीरं भिन्नः। एकपरिमाणेषु अनेकेषु सुवर्णघटेषु एको घट इति प्रतीतिवद्, व्रीहिराशौ एको व्रीहिरितिवच्च ज्ञानैकाकारतया एकत्वव्यवहारः। न तु स्वरूपैक्यम्। प्रमाणविरोधात्। स्वतः सुखी, उपाधिवशात् संसारः। अयं च कर्ता भोक्ता शरीरी शरीरं च भवति। प्रकृत्यपेक्षया शरीरी, ईश्वरापेक्षया शरीरम्। तस्य प्रत्यक्षश्रुतिभ्यां स्वयम्प्रकाशत्वं च सिद्धम्। प्रयोगश्च—आत्मा स्वयं प्रकाशो, ज्ञानत्वात्। धर्मभूतज्ञानवदिति। ज्ञानत्वाणुत्वाऽमलत्वादय एतस्य स्वरूपनिरूपकधर्माः

एतेन, ज्ञानस्य क्षणिकत्वात् क्षणिकज्ञानसन्तानरूप आत्मेति बौद्धपक्षः, भूतचतुष्टयात्मकत्वाद् देहस्य देहावधिक आत्मेति चार्वाकपक्षः, गजदेहे गजपरिमाणः पिपीलिकादेहे तत्परिमाणोऽतो देहपरिमाण आत्मेति जैनपक्षः, कर्तृत्वभोक्तृत्वादिकं प्रकृतेरेव, न तु पुरुषस्येति सांख्यपक्षः, ब्रह्मांशो जीव इति यादवपक्षः, सोपाधिब्रह्मखण्डो जीव इति भास्करपक्षः, अविद्याकल्पित एकजीववादपक्षः, अन्तःकरणावच्छिन्नानेकजीववादपक्ष इत्येवमादयो विरुद्धपक्षा निरस्ताः । विभुत्ववादपक्षोऽपि । ननु जीवस्य विभुत्वाऽनङ्गीकारे अदृष्टजनितदेशान्तरफलोपलब्धिः कथमिति चेन्न । जीवस्य संबन्धाभावेऽपि अदृष्टवशादेवोपपद्यते । अदृष्टं नाम भगवत्प्रीत्यप्रीतिजनकजीवकर्तृककर्म्मविशेषजन्यो ज्ञानविशेषः । स विशेषो भगवत्संकल्प एव विभुस्वरूपं भगवन्तमाश्रितः । अतः फलोपलब्धिरेवेति न विरोधः ।

स जीवस्त्रिविधः—बद्धमुक्तनित्यभेदात् । तत्र बद्धा नाम अनिवृत्तसंसाराः । ते चतुर्दशभुवनात्मकाण्डकटाहवर्तिनो ब्रह्मादिकीटपर्य्यन्ताश्चेतनविशेषाः । श्रीमन्नारायणनाभिकमलाद् उत्पन्नो ब्रह्मा, ब्रह्मणो रुद्रः, पुनर्ब्रह्मणः सनकादियोगिनो, नारदादिदेवऋषयो, वशिष्ठभृग्वादिब्रह्मऋषयः, पुलस्त्यमरीचिदक्षकश्यपादिनवप्रजापतयो बभूवुः । तेभ्यो देवा दिक्पालाश्चतुर्दशेन्द्राश्चतुर्दशमनवः, असुराः पितरः सिद्धगन्धर्वकिन्नरकिम्पुरुषविद्याधरादयो, वसवो, रुद्राः, आदित्या, अश्विनौ च दानवयक्षराक्षसपिशाचगुह्यकादय एवं देवयोनयो, मनुष्या अपि ब्राह्मणक्षत्रियवैश्यशूद्रादिजातिभेदाद् बहुविधाः । तिर्यञ्चोऽपि पशुमृगपक्षिसरीसृपपतङ्गकीटादिभेदाद् बहुविधाः । स्थावरा अपि वृक्षगुल्मलतावीरुधतृणादिभेदाद् बहुविधाः । वृक्षादीनां जलाहरणोपयुक्तकिञ्चिज्ज्ञान-

संबन्धोऽस्त्येव। अप्राणिमत्सु स्वल्पा सा* इत्युक्तत्वात्। अतो देवमनुष्यतिर्यक्स्थावरभेदभिन्ना बद्धाः। जरायुजाण्डजोद्भिज्जस्वेदजाश्च भवन्ति। देवमनुष्या जरायुजाः। तेषु ब्रह्मरुद्रादयः सनकादयश्च द्रौपदीधृष्टद्युम्नादयो भूतप्रेतवेतालादयश्च अयोनिजाः। तिर्यगादयश्च जरायुजा अण्डजाः स्वेदजाश्च भवन्ति। स्थावरादय उद्भिज्जाः॥

एवंभूता बद्धा बीजाङ्कुरन्यायेन विषमप्रवाहतया अनादिकालप्रवृत्ताऽविद्याकर्मवासनारुचिप्रकृतिसंबन्धैश्चक्रवत्परिवर्तमानैर्गर्भजन्मबाल्ययौवनजागरस्वप्नसुषुप्तिमूर्च्छाजरामरणस्वर्गनरकगमनादिविविधविचित्रावस्थावन्तोऽनाद्यनन्तप्रकारातिदुःसहतापत्रयाऽभितप्ताःस्वतःप्राप्तभगवदऽनुभवविच्छेदवन्तश्च ते द्विविधाः,शास्त्रवश्याः, तदवश्याश्चेति। तयोर्मध्ये करणायत्तज्ञानानां बद्धानां शास्त्रवश्यता, तिर्यक्स्थावरादीनां तन्नास्ति। शास्त्रवश्या द्विविधाः। बुभुक्षवो, मुमुक्षवश्चेति। तत्र बुभुक्षवस्त्रैवर्गिकपुरुषार्थनिष्ठाः पुरुषाः। ते च द्विविधाः। अर्थकामपरा, धर्मपराश्चेति। केवलार्थकामपरा देहात्माभिमानवन्तः। धर्मपराश्च—अलौकिकश्रेयःसाधनं धर्मः, चोदनालक्षणाऽर्थो धर्म इति धर्म्मलक्षणलक्षितयज्ञदानतपस्तीर्थयात्रादिनिष्ठाः। ते च देहातिरिक्तात्मनः परलोकोऽस्तीति ज्ञानवन्तः। धर्म्मपरा द्विविधाः। देवताऽन्तरपरा भगवत्पराश्चेति। देवतान्तरपरा ब्रह्मरुद्रेन्द्राग्न्याद्याराधनपराः। भगवत्पराश्च, आर्तोजिज्ञासुरर्थार्थीत्युक्ताधिकारिणः। आर्तो भ्रष्टैश्वर्यकामः। मुमुक्षुवो द्विविधाः। कैवल्यपरा मोक्षपराश्चेति। कैवल्यं नाम ज्ञानयोगात्प्रकृतिवियुक्तस्वात्मानुभवरूपोऽनुभवः। अर्चिरादिमार्गेण परमं पदं गत एव क्वचित् कोणे पतित्यक्तपत्नीन्यायेन भगवदऽनुभवव्यतिरिक्तस्वात्मानुभव इत्याहुः। केचिदर्चिरादिमार्गेण गतस्य पुनरावृत्त्यश्रवणात् प्रकृतिमण्डल एव क्वचिद्देशे स्वा-

त्मानुभव इत्यप्याहुः । मोक्षपराश्च द्विविधाः । भक्ता प्रपन्नाश्चेति । भक्ताः पुनरधीतसाङ्गसशिरस्कवेदाः पूर्वोत्तरमीमांसापरिचयाच्चिदचिद्विलक्षणम् अनवधिकातिशयानन्दस्वरूपं निखिलहेयप्रत्यनीकं समस्तकल्याणगुणात्मकं ब्रह्मावधार्य्य तत्प्राप्त्युपायभूतां साङ्गां भक्तिं स्वीकृत्य तया मोक्षं प्राप्तुकामाः । भक्तावधिकारस्त्रैवर्णिकानामेव । देवादीनामप्यस्ति । अर्थित्वसामर्थ्ययोः सम्भवात् । न शूद्राधिकारः । अपशूद्राधिकरणविरोधात् । भक्तिस्वरूपं तु बुद्धिपरिच्छेदे प्रतिपादितम् । भक्ता द्विविधाः । साधनभक्तिनिष्ठाः साध्यभक्तिनिष्ठाश्च । व्यासादयः साधनभक्तिनिष्ठाः । साध्यभक्तिनिष्ठा नाथादयः । आकिञ्चन्यानन्यगतिकत्वधर्मविशिष्टो भगवन्तमाश्रितः प्रपन्नः । सोऽपि द्विविधः । त्रैवर्गिकपरो मोक्षपरश्चेति । त्रैवर्गिकपरो नाम भगवत एव धर्मार्थकामाभिलाषी । मोक्षपरस्तु सत्सङ्गान्नित्यानित्यविवेके सति संसारे निर्वेदाद्वैराग्ये उत्पन्ने मोक्षेच्छायां जातायां तत्सिद्ध्यर्थम्, आचार्य्यो वेदसम्पन्न * इत्याद्याचार्य्यलक्षणलक्षितं गुरुं संश्रित्य तद्द्वारा पुरुषाकारभूतां श्रियं प्रपद्य भक्त्याद्युपायान्तरेण अशक्तः, अत एवाऽकिञ्चनानन्यगतिः श्रीमन्नारायणचरणावेव उपायत्वेन यः स्वीकरोति स प्रपन्नः । प्रपत्तिः सर्वाधिकारा । स च प्रपन्नो द्विविधः । एकान्ती परमैकान्ती चेति । यो मोक्षफलेन साकं फलान्तराण्यपि भगवत एवेच्छति स एकान्ती, देवतान्तरशून्य इत्यर्थः । भक्तिज्ञानाभ्यामन्यत्फलं भगवतोऽपि यो नेच्छति स परमैकान्ती । स द्विविधः- दृप्त आर्तश्चेति । अवश्यमनुभोक्तव्यमिति प्रारब्धकर्मानुभवन् एतद्देहावसानसमयमीक्षमाणो दृप्तः । जाज्वल्यमानाग्निमध्यस्थितस्येव संसारावस्थितेरतिदुःसहत्वात् प्रत्युत्तरक्षणमोक्षकाम आर्तः । मुक्तो नाम उपायपरिग्रहणानन्तरं नित्यनैमित्तिकभगवदाज्ञाकैङ्कर्य्यरू-

पाणि स्वयम्प्रयोजनतया कुर्वन् भगवद्भागवतापराधाँश्च वर्जयन् देहावसानकाले सुकृतदुष्कृते मित्रामित्रयोर्निक्षिपन्, वाङ् मनसीत्यादिप्रकारेण हार्द्दे परमात्मनि विश्रम्य मुक्तिद्वारभूतसुषुम्नाख्यनाड्यां प्रविश्य ब्रह्मरन्ध्रान्निष्क्रम्य हार्द्देन साकं सूर्यकिरणद्वारा अग्निलोकं गत्वा दिनपूर्वपक्षोत्तरायणसंवत्सराभिमानिदेवताभिर्वायुना च पथि सत्कृतः सूर्यमण्डलं भित्वा नभोरन्ध्रद्वारा सूर्यलोकं गत्वा अनन्तरं चन्द्रविद्युद्वरुणेन्द्रप्रजापतिभिर्मार्गदर्शिभिरातिवाहिकगणैः सोपचारैः सह तत्तल्लोकानतीत्य प्रकृतिवैकुण्ठसीमपरिच्छेदिकां विरजां तीर्त्वा सूक्ष्मशरीरं विहाय अमानवकरस्पर्शाद् अप्राकृतदिव्यविग्रहयुक्तः चतुर्भुजो ब्रह्मालङ्कारेणालङ्कृत इन्द्रप्रजापतिसंज्ञकनगरद्वारपालानभ्यनुज्ञाप्य श्रीवैकुण्ठाख्यं दिव्यनगरं प्रविश्य गरुडानन्तयुक्तपताकालङ्कृतदीर्घप्राकारसहितं गोपुरमतीत्य ऐरम्मदाख्याऽमृतसरः सोमसवनाख्याऽश्वत्थं च दृष्ट्वा, शतं मालाहस्तेत्युक्तपञ्चशतदिव्याप्सरोगणैरुपचरितो ब्रह्मगन्धादिभिरलङ्कृतः तत्रत्याऽनन्तगरुडविष्वक्सेनादीन् प्रणम्य तैर्बहुमतो महामणिमण्डपमासाद्य पर्य्यङ्कसमीपे स्वाचार्य्यान् प्रणम्य पर्य्यङ्कसमीपं गत्वा तत्र धर्मादिपीठोपरिकमले अनन्ते विमलादिभिश्चामरहस्तैः सेव्यमानं श्रीभूलीलासमेतं शङ्खचक्रादिदिव्यायुधोपेतं जाज्वल्यमानकिरीटं मकरकुण्डलग्रैवेयहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषणभूषितम् । अपरिमितोदारकल्याणगुणसागरं भगवन्तं दृष्ट्वा तत्पादारविन्दयुगले शिरसा प्रणम्य पादेन पर्य्यङ्कमारुह्य तेन स्वाङ्के स्थापितः, कोऽसीति पृष्टो, ब्रह्मप्रकारोऽस्मीत्युक्ते तेन कटाक्षितस्तदनुभवजनितहर्षप्रकर्षात् सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्य्यरतिः, आविर्भूतगुणाष्टक उत्तरावधिरहितब्रह्मानुभ-

भवान् यः स मुक्त इत्युच्यते । मुक्तस्य ब्रह्मसाम्यापत्तिश्रुतिस्तु भोगसाम्यमाह । जगद्व्यापारवर्ज्जनस्य प्रतिपादनात् । तस्य नानात्वं सर्वलोकसंचरणं च संभवति ।

ननु मुक्तस्य अनावृत्तित्वप्रतिपादनाद् अस्मिँल्लोके संचारः कथमिति न शङ्कनीयम् । कर्मकर्तृकस्यैव निषेधात् । स्वेच्छया संचरणोपपत्तेः । अतो मुक्तो भगवत्संकल्पायत्तस्वेच्छया सर्वत्र संचरति । नित्या नाम कदाचिदपि भगवदभिमतविरुद्धाचरणाभावेन ज्ञानसंकोचप्रसङ्गरहिताः । नित्याश्च अनन्तगरुडविष्वक्सेनादयः । तेषामधिकारविशेषा ईश्वरस्य नित्येच्छयैव अनादित्वेन व्यवस्थिताः । एतेषामवतारास्तु भगवदवतारवत् स्वेच्छया । एवं बद्धमुक्तनित्यभेदभिन्नो जीवो निरूपितः ॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां जीवनिरूपणं नामाऽष्टमोऽवतारः ॥ ८ ॥



अथेश्वरो निरूप्यते। सर्वेश्वरत्वं, सर्वशेषित्वं, सर्वकर्माराध्यत्वं, सर्वफलप्रदत्वं, सर्वाधारत्वं, सर्वकार्योत्पादकत्वं, स्वज्ञानस्वेतरसमस्तद्रव्यशरीरित्वम् इत्यादीनि ईश्वरलक्षणानि ।
अयमीश्वरः सूक्ष्मचिदचिद्विशिष्टवेषेण जगदुपादानकारणं भवति । संकल्पविशिष्टवेषेण निमित्तकारणम् । कालाद्यन्तर्य्यामिवेषेण सहकारिकारणं च।कार्य्यरूपेण विकारयोग्यं वस्तूपादानम्। कार्य्यतया परिणामयितृनिमित्तं कार्य्योत्पत्त्युपकरणं वस्तु सहकारि। यद्वा, उत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया तदनुगुणनियतपूर्वभाव्यऽवस्थाविशिष्टं यत् तदुपादानम् । यथा घटत्वाऽवस्थाविशिष्टमृद्द्रव्यापेक्षया पिण्डत्वाऽवस्थाविशिष्टं तदेव द्रव्यं परिणामौन्मुख्यातिरेकेण आकारेण अपेक्षितं कारणं निमित्तम् । अस्मिन् पक्षे सहकारिकारणस्य निमित्तेऽन्तर्भावः । एवं त्रिविधकारणपक्षे कारणद्वयपक्षे च कारणलक्षणलक्षितत्वादखिलजगत्कारणत्वं भगवतो नारायणस्यैव संभवति ॥

ननु कथं नारायणे कारणत्वपर्य्यवसानमिति चेद् उच्यते। न्यायसहितवेदान्तवाक्यविचारे एवं पर्य्यवस्यति । तद्यथा—आदौ तावत् प्रकृतेर्जगत्कारणत्वं नोपपद्यते। ईक्षत्याद्यभावात् । छान्दोग्ये तावत् सदाकाशप्राणशब्दवाच्यानां जगत्कारणत्वं प्रतीयते । वाजसनेयके ब्रह्मशब्दवाच्यस्य कारणत्वं प्रतीयते । सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामेकविषयत्वे प्रतिपादयितव्ये छागपशुन्यायेन सामान्यवाचकानां सदादिशब्दानां विशेषे ब्रह्मणि पर्य्यवसानं वक्तव्यम् । एवमुक्तन्यायेन ब्रह्मशब्दस्य तैत्तिरीयोक्त आत्मशब्दवाच्ये पर्य्यवसानम् ।आत्मशब्दवाच्यः क इत्याकाङ्क्षायां श्रुतिप्रसिद्ध इन्द्रो वा, तथा प्रसिद्धोऽग्निर्वा, उपास्यत्वेन प्रसिद्धः सूर्य्यो वा कारणत्वेन उक्तः । सोमो वा अभीष्टफलप्रदत्वेन उक्तः ।

कुबेरो वा, यमो वा, वरुणो वेति विशये, एतेषां कर्मवश्यत्वपरिच्छिन्नैश्वर्य्यवत्त्वसंहार्य्यत्वश्रवणान्न एते जगत् कारणभूताः; किन्तु श्वेताश्वतरे शिवस्य कारणत्वं भासत इति भाति। एवमथर्वशिखायां शम्भुशब्दवाच्यस्य ध्येयत्वं कारणत्वं भासते । तथैव अथर्वशिरसि रुद्रशब्दवाच्यस्य सर्वात्मकत्वं व्यज्यते। तैत्तिरीये हिरण्यगर्भस्य जगत्कारणत्वं प्रतीयते। अत्रापि सामान्यविशेषन्यायाच्छिवशम्भुरुद्रशब्दानां हिरण्यगर्भवाच्यविशेषे पर्य्यवसानं युज्यते। शिवशब्दस्य, शिवमस्तु सर्वजगतां, शिवं कर्मास्तु, पन्थानः सन्तु ते शिवाः—इत्यादिभिर्मङ्गलवाचकत्वम् । रुद्रशब्दस्य अग्निवाचकत्वम् । एवं महेश्वरशम्भ्वादिसामान्यशब्दा अपि अवयवशक्त्या चतुर्मुखे पर्य्यवस्यन्ति । कारणवाचिशिवादिशब्दानां मुख्यवृत्त्या रुद्रपरत्वं वा किन्न स्यादिति न शङ्कनीयम् । रुद्रस्य चतुर्मुखादुत्पत्तिश्रवणात् । अनपहतपाप्मत्वश्रवणाच्च न रुद्रस्य कारणत्वम् । अतो हिरण्यगर्भप्रजापतिस्वयम्भ्वादिशब्दवाच्ये चतुर्मुखे स्वयम्भ्वादिशब्दाः पर्य्यवस्यन्ति । एवमपि महोपनिषन्नारायणोपनिषत्सुबालोपनिषन्मैत्रायणीयपुरुषसूक्तनारायणाऽनुवाकाऽन्तर्य्यामिब्राह्मणादिषु नारायणस्यैव परमकारणत्वसर्वशब्दवाच्यत्वमोक्षप्रदत्वजगच्छरीरित्वादेः प्रतिपादनात् स्वयम्भूहिरण्यगर्भप्रजापतिशब्दानां नारायणे पर्य्यवसानं युक्तम् । नारायण एवाऽखिलजगत्कारणं, सर्वविद्यावेद्यश्च। नन्वन्तरादित्यविद्या रुद्रपरेति शङ्का न कार्य्या। तस्या विष्णुपरत्वस्यैव बहुप्रमाणेषु सिद्धत्वात्। भर्गःशब्दस्य सकारान्तत्वप्रतिपादनाच्च। तर्हि दहरविद्यायामाकाशशब्दवाच्यनारायणान्तर्यामितया रुद्रस्य प्रतिपादनाद्दहरविद्या रुद्रपरेति न शङ्कनीयम्। नारायणाऽन्तर्वर्तिगुणजातस्यैव उपास्यत्वेन तत्राभिधानात् । एवं सर्वविद्यास्वप्यूह्यम् । अतः समस्त-

कल्याणगुणात्मकं प्रकृतिपुरुषाभ्यां भिन्नं, ताभ्यां विशिष्टं, परं ब्रह्म जगत्कारणम्।

नन्वद्वैतश्रुत्या ब्रह्मात्मैक्यमेव सत्यं निर्गुणं च। तदन्यज्ज्ञातृज्ञेयादिकं तस्मिन्नेव परिकल्पितं सर्वं मिथ्या। ब्रह्म अविद्यया संसरति। तत्त्वमसीत्यभेदज्ञानं तन्निवर्तकम्। तस्मान्निर्विशेषचिन्मात्रे ब्रह्मणि वेदान्तानां तात्पर्य्यमिति मतान्तरस्थैः प्रतिपादनात्। कथं नारायणे तात्पर्य्यम्। तस्य समस्तकल्याणगुणाकरत्वादिकथनञ्चेति चेदुच्यते। कारणत्वप्रतिपादकश्रुतिभिर्नारायणस्य कारणत्वे सिद्धे भेदाभेदश्रुत्योर्घटकश्रुत्या विषयभेदेन अविरोधे प्रतिपादिते निर्गुणप्रतिपादकश्रुतीनां हेयगुणनिषेधकत्वाज्ज्ञातृज्ञेयादिकल्पकाऽविद्याया एव अप्रामाण्यात्। ब्रह्मकार्य्यस्य सत्यत्वाद्। अविद्यया संसारे जीवगतदोषाणां ब्रह्मण्यपि सम्भवात्तन्निवर्तकान्तरस्य वक्तुमशक्यत्वादतोऽद्वैतवादस्यासम्भवान्न निर्विशेषचिन्मात्रब्रह्मसिद्धिः। अतो नारायणस्यैव जगत्कारणत्वमोक्षप्रदत्वादिगुणयोगः सम्भवतीति सविशेषमेव ब्रह्म। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं, स्थूलचिदचिद्विशिष्टं ब्रह्म कार्य्यमिति कारणादनन्यत् कार्य्यमिति विशिष्टाद्वैतवेदान्तिनां सम्प्रदायः। एवमीश्वराङ्गीकारान्निरीश्वरसांख्यमीमांसकादिमतनिरासः। तस्यैव उपादानत्वस्वीकाराद् योगपाशुपतनैय्यायिकानां मतनिरासः। तैर्निमित्तमात्रेश्वराऽङ्गीकाराद् ईश्वरस्य कार्य्यं प्रति उपादानत्वनिमित्तत्ववत् कर्तृत्वप्रेरकत्वनियन्तृत्वप्रकाशितृत्वानुमन्तृत्वसहकारित्वोदासीनत्वादिकमप्युपपद्यते। बाल्ययौवनावस्थादयो दोषा यथा शरीरगता, न तु शरीरिणि जीवे; एवं चिदचिच्छरीरिणः परमात्मनोऽपीति न निर्विकारश्रुतिविरोधः। नियमेनाधेयत्वविधेयत्वशेषत्वादेः शरीरलक्षणस्य जगति विद्यमानत्वाज्जगच्छरीरी ईश्वरः, तद्गतदोषैरसंस्पृष्टश्च ॥

स चेश्वरो विभुस्वरूपः । विभुत्वं नाम व्यापकत्वम् । तच्च ईश्वरस्य त्रिधा । स्वरूपतो धर्मभूतज्ञानतो विग्रहतश्च । स चाऽनन्त इत्युच्यते । अनन्तो नाम—त्रिविधपरिच्छेदरहितः । त्रिविधः परिच्छेदस्तु देशतः, कालतो, वस्तुतः परिच्छेदः ।
सत्यत्वज्ञानत्वानन्दत्वाऽमलत्वादय ईश्वरस्य स्वरूपनिरूपकधर्म्माः । ज्ञानशक्त्यादयो निरूपितस्वरूपविशेषका धर्म्माः । सर्वज्ञत्वसर्वशक्तित्वादयः सृष्ट्युपयुक्ता धर्म्माः । वात्सल्यसौशील्यसौलभ्यादय आश्रयणोपयुक्ता धर्म्माः । कारुण्यादयो रक्षणोपयुक्तधर्माः । एतेषां स्वरूपं बुद्धिपरिच्छेदे निरूपितमिति इह न प्रपञ्च्यते ।

अयमीश्वरोऽण्डसृष्ट्यनन्तरं चतुर्मुखदक्षकालादिष्वन्तर्यामितया स्थित्वा सृष्टिं करोति । विष्ण्ववताररूपेण मनुकालाद्यन्तर्य्यामिरूपेण च स्थित्वा रक्षको भवति । रुद्रकालान्तकादीनाम् अन्तर्य्यामितया संहारमपि करोति । अतः सृष्टिस्थितिसंहारकर्ता च भवति । एवंप्रकार ईश्वरः परव्यूहविभवान्तर्य्याम्यर्चावताररूपेण पञ्चप्रकारः । तत्र परो नाम त्रिपाद्विभूतौ, कुमुदकुमुदाक्षपुण्डरीकवामनशङ्कुकर्णसर्वनेत्रसुमुखसुप्रतिष्ठितादिभिर्दिव्यायुधभूषणपरिजनपारिच्छदान्वितैर्दिव्यनगरपालकैः परिरक्षिते श्रीमद्वैकुण्ठाख्ये पुरे चण्डप्रचण्डभद्रसुभद्रजयविजयधातृविधातृप्रभृतिभिर्द्वारपालकैरुपेते, श्रीमद्दिव्यालये श्रीमहामाणिमण्डपे धर्माद्यष्टपादविरचितसिंहासने शेषपर्य्यङ्के दिव्यमङ्गलविग्रहविशिष्टश्चतुर्भुजः, श्रीभूलीलासहितः, शङ्खचक्रादिदिव्यायुधोपेतः, श्रीमत्किरीटादिदिव्यभूषणभूषितः, अनन्तगरुडविष्वक्सेनादिभिर्नित्यैः सामगानपरैरन्यैर्मुक्तैश्चानुभूयमानो, ज्ञानशक्त्याद्यनन्तकल्याणगुणविशिष्टः परब्रह्मपरवासुदेवादिशब्दवाच्यो नारायणः । व्यूहो नाम पर एव उपासनार्थं जगत्सृष्ट्याद्यर्थं च वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन

चतुर्द्धाऽवस्थितः। तत्र षड्गुणपरिपूर्णो वासुदेवो, ज्ञानबलाभ्यां संकर्षणः, ऐश्वर्य्यवीर्य्याभ्यां प्रद्युम्नः, शक्तितेजोभ्यामनिरुद्ध इति गुणविभागः ॥

एतेषु चतुर्षु प्रत्येकं त्रयस्त्रयोऽवतीर्णाः केशवादयो व्यूहान्तराणि द्वादशमासानां द्वादशादित्यानां च आधिदैवतानि। ऊर्द्ध्वपुण्ड्रेषु तेषामेव स्थानं विधीयते। तत्र कनकप्रभः केशवश्चतुश्चक्रधरः। श्यामो नारायणश्चतुःशङ्खधरः। मणिप्रभाभो माधवश्चतुर्गदाधरः। चन्द्राभो गोविन्दश्चतुःशार्ङ्गधरः। पद्मकिञ्जल्कसन्निभो विष्णुश्चतुर्हलधरः। अब्जाभो मधुसूदनश्चतुर्मुसलधरः। अग्निवर्णस्त्रिविक्रमश्चतुःखड्गधरः। बालसूर्याभो वामनश्चतुर्वज्रधरः। पुण्डरीकाभः श्रीधरश्चतुष्पट्टीशधरः। ताडित्प्रभो हृषीकेशश्चतुर्मुद्गरधरः। सूर्याभः पद्मनाभः पञ्चायुधधरः। इन्द्रगोपनिभो दामोदरश्चतुःपाशधरः ॥

विभवो नाम तत्तत्सजातीयरूपेण आविर्भावः। स दशधा। ते च मत्स्यादयोऽवतारविशेषाः। ब्रह्मणे प्रमाणप्रदत्त्वार्थो मत्स्याऽवतारः। अमृतोत्पादने मन्दरधराधारत्वेन अवतीर्णः कूर्मावतारः। आश्रितसंरक्षणार्थं महाऽसुरगृहस्तम्भेऽवतीर्णो नृसिंहः। त्रिविक्रमो भूत्वा स्वपादारविन्दोद्भवेन जलेन जगत्पापहरणेन तद्रक्षणार्थमवतीर्णो वामनः। दुष्टक्षत्रियनिरसनार्थं परशुरामः। शरणागतरक्षणधर्मस्थापनार्थं श्रीरामः। प्रलम्बादिनिरसनार्थं बलभद्रः। मोक्षोपायदर्शनार्थं श्रीकृष्णः। कलिनिर्मोचनार्थं कल्क्यवतारः। एवमेकैकावतारेषु अनन्तप्रकाराः सन्ति। षट्त्रिंशद्भेदभिन्नाः पद्मनाभादयोऽपि। पुनर्दधिभक्तहयग्रीवनरनारायणादयोऽपि। एवं मुख्यगौणपूर्णांशावेशाद्यवतारा बहुप्रकाराः। तेषु उपास्यानुपास्यविभागो द्रष्टव्यः। अवताराणामिच्छैव हेतुः। न कर्मप्रयोजने हेतुः। दुष्कृतिविनाशपूर्वकं साधुपरित्राणमेव ॥

अन्तर्यामित्वं नाम स्वर्गनरकाद्यनुभवदशायामपि जीवात्मनः सुहृत्त्वेन योगिभिर्द्रष्टव्यतया हृदयप्रदेशावस्थितं रूपम्। जीवेन साकं विद्यमानोऽपि तद्गतदोषैरसंस्पृष्टो वर्तते। अर्चावतारो नाम देशकालविप्रकर्षरहित आश्रिताभिमतद्रव्यादिकं शरीरतया स्वीकृत्य तस्मिन्नप्राकृतशरीरविशिष्टः सन्नर्चकपराधीनस्नानभोजनाऽऽसनशयनास्थितिः सर्वसहिष्णुः परिपूर्णो गृहग्रामनगरप्रशस्तदेशशैलादिषु वर्तमानो मूर्तिविशेषः। स च स्वयंव्यक्तदैवसैद्धमानुषभेदाच्चतुर्विधः। एवमुक्तासु पञ्चावस्थास्वपि श्रीविशिष्ट एव भगवान् वर्तत इति श्रुत्या प्रमाणसिद्धोऽर्थः। एतेन एकायनोक्तनिःश्रीकवादो निरस्तः। एवमीश्वरो निरूपितः॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्य्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायाम् ईश्वरनिरूपणं नाम नवमोऽवतारः॥ ९ ॥



एवं द्रव्यानिरूपणानन्तरं क्रमप्राप्तमद्रव्यं निरूप्यते। संयोगरहितमद्रव्यम्। तदद्रव्यं च सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धाः संयोगः शक्तिरिति दशप्रकारमेव। तत्र प्रकाशसुखलाघवादिनिदानमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं सत्त्वम्। तद् द्विविधम्। शुद्धसत्त्वं, मिश्रसत्त्वं चेति। रजस्तमःशून्यद्रव्यवर्ति सत्त्वं शुद्धसत्त्वम्। तन्नित्यविभूतौ उपचारात्तत्प्रवर्तकेश्वरे च। रजस्तमःसहवर्तिसत्त्वं मिश्रसत्त्वम्। तत् त्रिगुणे तत्सम्बन्धिनि जीवे चोपचारादिति ज्ञेयम्। लोभप्रवृत्त्यादिनिदानमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं रजः। प्रमादमोहादिनिमित्तमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं तमः। त्रीण्यप्येतानि यावत्प्रकृतिव्याप्तानि, प्रकृतिवश्यपुरुषसम्बद्धानि, अनित्यानि, नित्यसन्तानानि, प्रलयदशायां समानि, सृष्ट्यादौ विषमाणि, सृष्टिस्थितिसंहारोपयुक्तानि, ईश्वरसङ्कल्पादिसहकारिभेदात् परस्पराऽभिभवोद्भवकराणि इत्येतानि साधारणानि। सत्त्वगुणस्तु सम्यक्तत्त्वज्ञानरूपसुखादिहेतुः मोक्षप्रदश्च। रजोगुणस्तु रागाद्यात्मकः कर्मसङ्गदुःखादिहेतुरुत्पत्तिहेतुः स्वर्गाद्यामुष्मिकप्रदः। तमोगुणस्त्वज्ञानरूप आलस्यादिहेतुर्नरकप्रदश्च। अतः सत्त्वादयो गुणा न द्रव्यरूपाः। अस्मदादिश्रोत्रग्राह्यः पञ्चभूतवर्ती शब्दः। स द्विविधः। वर्णात्मकोऽवर्णात्मकश्चेति। अकचटतपादिविशिष्टपञ्चाशदक्षरात्मको देवमनुष्यादीनां ताल्वादिव्यङ्ग्यः, भेर्यादिजन्योऽवर्णात्मकः। एवंभूतः शब्दः श्रोत्रेन्द्रियेण गृह्यते। श्रोत्रेन्द्रियगमनाद्वा, व्यञ्जकवाय्वागमनाद् वा शब्दग्रहः। ननु श्रुत्या शब्दस्य द्रव्यत्वं प्रतीयते। अद्रव्यत्वं कथमितिचेन्न। अकारादेः प्रणवोपपादकत्वं वाच्यद्वारा सम्भवतीति परिहाराद् अद्रव्यत्वमुपपद्यते। अस्मदादिस्पर्शनेन्द्रियग्राह्यविजातीयव्यावर्तमद्रव्यं स्पर्शः। स चत्रिविधः। शीतोष्णाऽनुभ-

यात्मकभेदात् । अप्सु शीतस्पर्शः । तेजस्युष्णस्पर्शः । क्षितिपवन-
योरनुष्णाशीतस्पर्शः । स च पुनर्द्विविधः, पाकजोऽपाकजश्चे-
ति । पृथिव्यां पूर्वः, इतरेषु त्रिष्वितरः । तत्राऽमृतगरलतूलोपल-
गोब्राह्मणचाण्डालादिस्पर्शविशेषाः पाकजभेदा इति स्पर्शः ॥

अस्मदादिचक्षुरिन्द्रियैकग्राह्यं विजातीयव्यावर्तमद्रव्यं रूपम् ।
तच्चतुर्धा श्वेतरक्तपीतकृष्णभेदात् । तत्र सलिलकलधौतशङ्खशुक्ति-
शशाङ्कादीनां रूपविशेषाः श्वेतभेदाः । हुतवहजपादाडिमबन्धुजीव-
विद्रुमपद्मरागादीनां तु रूपविशेषा रक्तभेदाः । काञ्चनहरिताल-
हरिद्रादीनां पीतभेदाः । मरकतमधुकरजलधरतिमिरतमालदूर्वा-
दीनां कृष्णभेदाः । पीतमपि रक्ताऽवान्तरभेदं केचिदिच्छन्ति ।
श्रुत्यनुसारात् । प्रकारान्तरेण द्विविधा भास्वराभास्वरभेदात् ।
तेजोगतं भास्वरं, क्षितिसलिलगतं चाभास्वरम् । एवं चत्वार्येव
रूपाणि । तेन चित्रं नाम पञ्चमं रूपमिति मतनिरासः । अत एव
चित्ररसगन्धादिस्पर्शानामपि निरासः । एवं चत्वार्येव रूपाणि ॥

अस्मदादिजिह्वैकग्राह्यविजातीयेतरो रसः षोढा । स यथा—
मधुराम्ललवणकटुतिक्तककषायभेदात् । तत्र इक्षुक्षीरगुडादिरसा
मधुरभेदाः । चूतचिञ्चाऽमलकादिरसा आम्लाः । सैन्धवोषरविका-
रादिभेदा लवणभेदाः । किम्पाकनिम्बादिरसाः कटुकभेदाः ।
शुण्ठीमरीचीसर्षपादिरसास्तिक्तभेदाः । हरीतकीबिभीतकचूताङ्कु-
रादिरसाः कषायभेदा इति रसः ॥

अस्मदादिघ्राणग्राह्यो विजातीयेतरोऽद्रव्यविशेषो गन्धः । स
द्विविधः सुरभिरसुरभिश्चेति । पाटीरमृगमदघुसृणचम्पकादिगन्धाः
सुरभिभेदाः । अयञ्च गन्धः पृथिव्येकवर्ती पाकभेदाद् भिन्नः ।
पवनसलिलादिषु गन्धोपलब्धिः पार्थिवसंसर्गाद् अयो दहतीति-
वदौपचारिकी । पञ्चीकरणप्रक्रियया सर्वभूतेषु सर्वगुणानां विद्य-

मानत्वेऽपि प्राधान्याभिप्रायेणोक्तमिति च विरोधः । पाकाद् गुणान्तरोत्पत्तिः । स्वाश्रयनाशाऽभावादेवोपपत्तेः पीलुपाकवादिमतनिरासः ॥

संयुक्तप्रत्ययनिमित्तं संयोगः । स च सामान्यगुणः षड्द्रव्यवृत्तिः । अस्य च स्वाभावसादेश्यमुपलभ्यमानमङ्गभेदप्रयुक्ततया न विरोधावहम् । स कार्य्याकार्य्यभेदाद् द्विविधः । पूर्वः परिमितानाम् उभयप्रेरणात् । यथा मेषयोर्मल्लयोर्वा । क्वचिदन्यतरप्रेरणात् । यथा स्थाणुश्येनयोः संयोगः । केचित् संयोगजं संयोगमपि वर्णयन्ति । हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति । तत्र हस्तसंयोगादेव कायसंयोगः । हस्तस्य कायत्वात् । एतेन विभागजविभागो निराकृतः । विभागोऽपि संयोगाभाव एव, न पृथग्गुणः । अकार्य्यसंयोगः, स विभुद्रव्ययोः । अजद्रव्यसंयोगः श्रुत्या अङ्गीक्रियते । अनुमानादप्यजसंयोगसिद्धिः । यथा– विभुद्रव्यं विभुद्रव्यसंयोगवत् । द्रव्यत्वात् । घटवत् । तथा विभुद्रव्यमीश्वरसंयुक्तं द्रव्यत्वात् । पक्वघटवत् । ईश्वरः कालादिसंयुक्तः । द्रव्यत्वात् । घटवदित्यादिभिर्विभुसंयोगसिद्धिः ॥

अथ शक्तिः । सर्वकारणानां कारणत्वनिर्वाहकः कश्चिदद्रव्यविशेषः शक्तिः । तर्कागमाभ्यां तत्सिद्धेः । प्रतिबन्धकमणिमन्त्रादिसन्निधौ स्वरूपसहकारिवैकल्याभावेऽपि यदुपरोधाद्दहनो न दहति सा ह्यतीन्द्रिया शक्तिः । अयस्कान्तादिषु तत्प्रसिद्धिः । सा शक्तिः षड्द्रव्यवृत्तिः । भगवन्निष्ठत्वं पुराणरत्नादिषु प्रसिद्धम् । एवं सर्वत्रापीति शक्तिर्नाम धर्मविशेषः सिद्धः । ननु चतुर्विंशतिप्रकारा गुणा इत्युक्तत्वात् कथं दशैवेति निर्दिश्यत इतिचेदुच्यते । जीवात्मविशेषगुणानां बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां षण्णां ज्ञानविततिरूपत्वेन ज्ञानान्तर्भावस्य उक्तत्वात् । धर्माधर्म-

योरपि ईश्वरप्रीत्यप्रीतिरूपत्वेन ईश्वरज्ञानेऽन्तर्भावात् । भावनाख्य-संस्कारस्य ज्ञानविशेषरूपत्वात् । वेगोत्पादकहेतोरेव वेगाख्यसं-स्कारोपपत्तेः । संयोगमादाय स्थितिस्थापकस्यापि सम्भवात् । शब्द-स्पर्शरूपरसगन्धानां पञ्चानां प्रत्यक्षसिद्धत्वेन अङ्गीकाराद् विभाग-पृथक्त्वयोरपि संयोगमादायोपपत्तेः । परत्वापरत्वयोर्देशकालसंयोग-विशेषमादाय उपपादयितुं शक्यत्वात् । संख्यापरिमाणद्रवत्व-स्नेहानां तत्तद्द्रव्यस्वरूपमादायोपपत्तेः । गुरुत्वस्य शक्त्यन्तर्भा-वस्य वक्तुमुचितत्वाच्च दशैवेति सुष्ठूक्तम् ॥

सत्त्वरजतमांसि प्रकृतिगुणास्तत्सम्बन्धिजीवगुणाश्च । सत्त्वरूपं ज्ञानम् । सात्त्विकः काल इत्यादिप्रतीतिरुपाधिवशादौपचारि-की । शब्दादयः पञ्च प्रकृतिकार्यपञ्चमहाभूतगुणत्वेन प्रसिद्धाः । शुद्धसत्त्वं तु त्रिपादविभूत्यां तत्प्रवर्तकेश्वरे च संयोगशक्तिरूपौ गुणौ षड्द्रव्यसाधारणाविति विवेकः । इत्यद्रव्यं निरूपितम् ॥

एवं द्रविडभाष्य–न्यायतत्त्व–सिद्धित्रय–श्रीभाष्यदीपसार-वेदार्थसंग्रह भाष्यविवरण–संगतिमाला-षडर्थसंक्षेप-श्रुतप्रकाशिका-तत्त्वरत्नाकर–प्रज्ञापरित्राण-प्रमेयसंग्रह-न्यायकुलिश-न्यायसुदर्शन-मानयाथात्म्यनिर्णय–न्यायसार––तत्त्वदीपन–तत्त्वनिर्णय––सर्वा-र्थसिद्धि–न्यायपरिशुद्धि––न्यायसिद्धाञ्जन-–परमतभङ्ग–तत्त्व-त्रयचुलुक–तत्त्वत्रयनिरूपण–तत्त्वत्रयचण्डमारुत-–वेदान्तविजय-पाराशर्यविजयादिपूर्वाचार्यप्रबन्धानुसारेण ज्ञातव्यार्थान् संगृह्य बालबोधार्थं यतीन्द्रमतदीपिकाख्यशारीरकपरिभाषायामस्यामन्ते प्रतिपादिताः । अध्यात्मशास्त्राणां तत्त्वहितपुरुषार्थप्रतिपादकत्वात् तत्सारेऽस्मिन्नपि प्रकृतिजीवेश्वरपरिच्छेदैस्तत्त्वस्य निरूपणाच्च त-त्त्वोपायपुरुषार्था निरूपिता इति निरवद्यम् ॥

एकं तत्त्वमिति प्रतिपादयन्ति सूरयः । आत्मानात्मेति वि-

भज्य द्वेधा निरूपयन्त्यृषयः। श्रुत्यनुसाराद् भोक्तृभोग्यनियन्तृरूपं तत्त्वत्रयमिति प्रतिपादयन्त्याचार्याः। हेयं, तस्य निवर्तकम्, उपादेयं, तस्योपायं चतुर्द्धा विभज्यानुसन्दधते। केचिदाचार्याः प्राप्यं, प्राप्ता, प्राप्त्युपायः, फलं विरोधीति पञ्चधा निरूपयन्ति। अर्थं पञ्चधा निरूपयन्ति। अर्थपञ्चकमेव सम्बन्धेन साकं षोढा परिगणय्य वर्णयन्ति। एतेषां तत्तद्विभाजकधर्ममादायानुसन्धानमुपपद्यते॥

वस्तुतस्तु वेदान्तानां चिदचिद्विशिष्टाऽद्वैतमेकमेव ब्रह्मेति तात्पर्यम्। अत एव चिदचिद्विशिष्टं ब्रह्मैकमेवेति मत्वा भगवान् बादरायणः, अथाऽतो ब्रह्मजिज्ञासेति उपक्रम्य, तमेव प्रकारं निरूपितवान्। अतश्चिदचिद्विशिष्टो ब्रह्मशब्दवाच्यो विष्ण्वाख्यः परवासुदेवो नारायण एवैकं तत्त्वमिति विशिष्टाद्वैतवादिनां दर्शनमिति सिद्धम्॥

इति विविधविचित्रं मानमेयप्रकाशं
घनगुरुवरदासेनोक्तमादाय शास्त्रात्।
यतिपतिमतदीपं वेदवेदान्तसारं
स भवति मतिमान् यः सत्कटाक्षैकलक्ष्यः॥ १॥

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यप्रथमदासेन श्रीमद्वेङ्कटगिरिनाथपदकमलसेवापरायणस्वामिपुष्करिणिगोविन्दाचार्यसूनुना श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायामद्रव्यपरिच्छेदो नाम दशमोऽवतारः॥ १०॥

श्रीगणेशाय नमः ।

# अथ सकलाऽऽचार्यमतसंग्रहः ।

अथ श्रीविष्णुस्वामिशुद्धाद्वैतमतम् । तथाहि ।

विशेषैः प्राकृतैः शून्यमप्राकृतविशेषवत् ॥
अशेषोपनिषद्वेद्यं परं ब्रह्माऽस्तु ते मुदे ॥ १ ॥

ननु कथमयमपूर्वस्य प्रस्तावः । ननु कथमस्यापूर्वत्वम् ? निखिलप्रमाणसिद्धत्वादितिचेन्न । सर्वागमविरुद्धत्वात् । तथाहि । सर्वं खल्विदं ब्रह्म, तज्जलानिति, अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा, जन्माद्यस्य यतः शास्त्रयोनित्वादित्यादिश्रुतिस्मृतिसूत्रैः सर्वस्यापि जगतो ब्रह्मात्मकत्वेऽवधारिते तदन्तःपातिनामपि तेषां ब्रह्मत्वमेवेति, कथं च तन्निषेध(१) इति चेत् । सत्यम् । एकाकी न रमते, स द्वितीयमैच्छत्, एकोऽहं बहु स्यामिति श्रुत्येकवाक्यतायां रमणार्थमेव नामरूपवैचित्र्येण स्वाविर्भावेच्छां कृतवानित्यर्थो लभ्यते । वैचित्र्यं चोच्चावचकृतम् । तच्च न्यूनाधिकांशमन्तरा न संभवतीति अचिन्त्यशक्तित्वात् सच्चिदानन्दांशांनेव यथानुरूपेणाऽतिरोभाव्य जडजीवान्तर्यामिरूपेण स्वयं प्रादुर्भूतः । यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ति एवं सोम्य भावा इत्यादि श्रुतेः । आविर्भावस्तु विद्यमानस्य वस्तुनोऽनुभवविषयता योग्यत्वम् । तदयोग्यत्वं च तिरोभावः । अत्र अनुभवस्तु जैवो ग्राह्यो, जीवान्तर्यामिसाधारणो वा । तत्र तिरोहितचिदानन्दांशत्वेन जडत्वं, तिरोहितानन्दत्वेन जीवत्वम्, आविर्भूतानन्दत्वेन ब्रह्मत्वम्, अतिरोहितसच्चिदाद्यंशत्रयत्वमन्तर्यामि-

---

(१) विशेषैः प्राकृतैः शून्यमित्यनेनेत्यर्थः ।

त्वमिति । एवमेव भगशब्दवाच्यानामैश्वर्यादिषण्णामपि धर्माणां तिरोभावम् अविद्यासंबन्धेन जीवे कृतवान् । तथैव बन्धो जन्ममरणदेहादिरागरूपो विरीतज्ञानं च अविद्ययैव । बन्धोऽस्याविद्ययैवेति वाक्यात् । जीवस्यान्यप्रयोजनाभावात् । जडे तु चितश्च । जडजीवरूपब्रह्मण्यऽब्रह्मत्वेन ज्ञानं भवति तिरोभावादैश्वर्यादीनाम् । तथा तत्तिरोभावश्चेतनधर्मत्वात्तेषाम् । तथाचैतादृशस्य जीवस्याविद्यकं ब्रह्मस्वरूपेषु तद्धर्मेषु च विपरीतज्ञानं भवति । सत्यत्वाद्यनेकालौकिकधर्मेषु च असत्यत्वविकारित्वाद्यनेकलौकिकत्वेन ज्ञानं च भवति । एवञ्च सति अविद्यासंबन्धेन विषयीकृता लौकिका ये जडजीवधर्मास्त एव प्राकृतविशेषास्तेषामनाश्रयत्वात् तैः शून्यमित्यर्थः । प्रकृतिसंबन्धसहकृतेन्द्रियजन्यज्ञानाविषयत्वं प्राकृतत्वमिति । प्रमाणं चात्र निषेधिकाः श्रुतयः । एतेन निषेधश्रुतयोऽपि विषयप्रदर्शनमुखेन व्याख्याता ज्ञेयाः ।

यद्यप्येतादृशनिषेधेनैव वक्ष्यमाणार्थसिद्धिस्तथापि विशेषत्वावच्छिन्नस्य प्राकृतत्वात् तदितरधर्माणां चाप्रसिद्धेर्विधायकश्रुतेश्चान्यपरत्वान्निर्विशेषमेव ब्रह्म सिद्ध्यतीति मतान्तरव्युदस्तये विशेषणान्तरमाहुः ॥ अप्राकृतेति ॥ न प्राकृता अप्राकृताः, प्रकृतिसंबन्धसहकृतेन्द्रियाऽविषयाः । ईदृशविशेषवदित्यर्थः । प्रमाणं चात्र पूर्वोदाहृतश्रुत्याद्याकलनीयम् । ननु पूर्वोदाहृतश्रुत्याद्युदाहृतकर्तृत्वाऽऽदिधर्माणां मायिकत्वात् कथं तथात्वमिति चेन्मैवम् । तेषां मायिकत्वे प्रमाणाभावात् । ननु निषेधश्रुत्यनुरोधात् तथा कल्प्यते । नैतद्युक्तम् । निषेधश्रुतेः प्राकृततद्विषयत्वात् । अन्यथा पाणिपादादिमत्त्वं निषिध्य, जवनेसादिना, पराऽस्य शक्तिरित्यादिना च क्रियाज्ञानविधानवैयर्थ्यापत्तिः । नन्वन्तःकरणशुद्धिहेतूपासनार्थत्वात् तेषां न वैयर्थ्यम् । निर्विशेषस्य ध्यातुमश-

कयत्वात्। उपासनार्थमलौकिकानामेव तेषां विधानमितिचेन्न। लोकप्रसिद्धत्वेन लौकिकत्वादितिचेन्नैवम् । पादादिसाधनरहितजवनादिक्रियाया अलौकिकत्वे च सर्वरूपज्ञानार्थं निर्धर्मकत्वविधानम्। उपास्त्यर्थं तु धर्मविधानमिति वाक्यभेदापत्तेः। भ्रान्तिप्रतिपन्नविषयवैशिष्ट्येन उपासनाया अन्तःशुद्धेरजननाच्च।
अन्यथा सन्तम्*इत्यादिनिन्दाश्रुतेश्च। नचाऽसतोऽपि वैशिष्ट्यज्ञानं शाखाचन्द्रन्यायेन स्वरूपावगतिसाधनमिति नैतद्दोषावसर इति वाच्यम् । दृष्टान्तवैषम्यात्। न हि शाखावद् ब्रह्म प्रत्यक्षं, यस्मिँश्चन्द्र इव धर्म आरोप्यते । नापि पाणिपादादिराहित्येऽपि जवनग्रहीतृत्वादयो धर्माः क्वचित् प्रत्यक्षाः । तथाचाधिष्ठानाधिष्ठेययोरप्यप्रत्यक्षत्वान्न दृष्टान्तबलेन तत्सिद्धिः। किञ्च, आरोपो हि अन्यधर्मस्यान्यत्र स्थापनम्। इत्थञ्च सति स्वनिरूप्यधर्माणां लोकप्रसिद्धतया अन्यदीयत्वाभावादारोपलक्षणासङ्गतेर्नारोपोऽपि वक्तुं शक्यः। अत एव निषेधविषयत्वमपि तेषाम् । प्रतीतस्यैव निषेधात्। नच लोके अस्मद्दृष्ट्यविषयत्वेऽपि श्रुतिदृष्टिगोचरत्वेन आरोपनिषेधौ नानुपपन्नाविति वाच्यम्। लोके मूर्तामूर्तविलक्षणरूपसत्त्वे, द्वे वा वेति श्रुतिविरोधात्। नचेदमस्मदज्ञानानुवाद इतिवाच्यम्। तथापि तयोरनुपपत्तेः। ननु कथमितिचेदित्थम्। श्रुतिर्हि दोषदृष्ट्या किं तान् विषयीकरोति शुक्तिरजतवत्, किं वा गुणदृष्ट्या रजतत्ववति रजते रजतत्ववत् । नाद्यः। रजतवदन्यत्रादर्शनेन तद्धर्मानुत्पत्तेः। नचास्मदादिवत् तासामविद्यावशाद् विपरीतज्ञानम्। जीववत् तासामविद्यासम्बन्धानुक्तेः। द्वितीये तु निषेधानुपपत्तेः । ब्रह्मणः सदैकरसत्वान्नावस्थाभेदः। किञ्च, उपासनार्थमसदुपदेशे प्रतारकत्वापत्तेश्च। तथाच धर्माणां मायिकत्वाभावाद् सिद्धमप्राकृतधर्मवत्त्वं ब्रह्मणः। अत्रैव हेतु-

गर्भविशेषणमाहुः ॥ अशेषोपनिषद्वेद्यमिति ॥ सर्वोपनिषत्प्रतिपाद्यमित्यर्थः । अस्य तत्त्वं त्वित्थं बोध्यम् । तथाहि । यदि धर्माः प्राकृताः स्युस्तर्हि तद्विशेषं ब्रह्म भवेत् । तथा सति तत्प्रतिपादकवेदान्तानाम् अब्रह्मपरत्वे, सर्वे वेदा यत्पदमित्यादिवाक्यानि कुप्येरन् । औपनिषदत्वमपि साधारणं स्यादत ईदृशवाक्याऽन्यथाऽनुपपत्तिरेव विशेषाणामप्राकृतत्वं साधयतीति सुधीभिरवसेयमिति।

किञ्च, ब्रह्ममाययोः कः संबन्धः ? । न तावत् संयोगः। अत्र संयोगनिषेधात् । उभयोरन्यतरास्थितेरनाश्रितत्वादुभयोर्न समवायः । नापि स्वरूपलक्षणः । विशेषणविशेष्यादिभावाभावेन तस्य वक्तुमशक्यत्वात् । नन्वस्तु विशेषणविशेष्यभावो दोषाऽभावात् । नैवं वक्तुं शक्यम् । तथाभावे ब्रह्मणः सधर्मकत्वापत्तेरेव दोषत्वात् । अथ कर्तृत्वादिधर्मवद्विशेष्यत्वमपि मायिकमिति न तदापत्तिर्वास्तवत्वाभावात् । तत्र मायिकत्वं, मायाजन्यत्वं ? मायासम्बन्धेन प्रतीयमानत्वं वा ? । आद्ये ब्रह्मणः सधर्मकत्वापत्तिः । द्वितीये असङ्गश्रुतिविरोधः । ननु न ब्रह्मणि मायासंबन्धं ब्रूमोऽपि तु जीवे इति । तथाच जीवनिष्ठया दोषरूपया तया विचित्रा धर्माः प्रसाय्यन्ते, आरक्ताद्युपनेत्रवदिति चेन्न । ब्रह्माभिन्नत्वेन तथा वक्तुमशक्यत्वात् । तादृशोपनेत्रवन्मायायास्तद्धर्मत्वापत्तेश्च । तथाच सम्बन्धस्य वक्तुमशक्यत्वेन औपाधिकभेदासम्भवादप्राकृतानेकधर्मवत्तया सर्वोपनिषद्वेद्यत्वं सिद्धं ब्रह्मण इति दिक् ॥

उक्तविशेषणविशिष्टं वक्तुं विशेष्यत्वेन निर्दिशति । परमिति । सामान्येन परत्वस्येन्द्रियादिष्वपि, इन्द्रियाणि पराण्याहुरिति वाक्येन उक्तत्वात् ॥ ब्रह्मेति ॥ सर्वेभ्यो यत्परं ब्रह्म तदित्यर्थः । नच ब्रह्मपदत्वेनैव परत्वे प्राप्ते परपदानर्थक्यमिति वाच्य-

म्। इन्द्रियादिपरत्वस्य ज्ञेये ब्रह्मण्यपि सत्त्वात्, ततोऽपि परत्व-बोधनेन सार्थक्यात्। ननु, "महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति" रिति श्रुत्या, इन्द्रियाणि पराण्याहुरिति स्मृत्या च ब्रह्मणोऽन्यस्य परत्वाभावात् कथं तत्परत्वमिति चेदत्रोच्यते। उक्तश्रुतिवाक्ये पुरुषपदं न परब्रह्मवाचकं, किन्त्वक्षरब्रह्मपरम्। स्मृतेश्च तदनुयायित्वात्। तत्रापि बुद्ध्यपेक्षत्वेन अक्षरं ब्रह्मैव ज्ञेयम्। नचात्र प्रमाणाभावः। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव चेति सद्भावात्। तथा द्वाविमाविति वाक्यानुरोधात्, क्षरस्य परत्वासम्भवाच्च अक्षरवाचकमेव तत्र पुरुषपदम्। उत्तमः पुरुषस्त्वन्य इति परमात्मपदेन तत्पृथक् परब्रह्मनिर्देशाच्च। तथाचैतादृशं ब्रह्म वाञ्छितप्रदानेन ते मुदे प्रीतये अस्त्वित्याशीर्वचनम्॥

अथ रामानुजाचार्यविशिष्टाद्वैतमतम्। तथाहि। अचिद्वस्तुनः स्वरूपतः स्वभावतश्च अत्यन्तविलक्षणस्तदात्मभूतश्चेतनः प्रत्यगाऽऽत्मा। तस्माद् बद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया कल्याणैकतानतया च सर्वावस्थचिदचिद्व्यापकतया च नियन्तृतया शेषितया च अत्यन्तविलक्षणः परमात्मा। तदुक्तं भगवता। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च * क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते * उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः * यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इति। श्रुतिश्च, प्रधानक्षेत्रज्ञपतिर्गुणेशः, पतिं विश्वस्यात्मेश्वरम्, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादिका। सूत्रकारश्चैवं वदति, नेतरोऽनुपपत्तेः, भेदव्यपदेशात्, अनुपपत्तेस्तु न शारीर इत्यादिभिः। नचाऽविद्याकृतं भेदमाश्रित्यैते निर्देशाः। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः * सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च * तदा

विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । मुक्तोपसृप्यव्यपदेशाच्च । भोगमात्रसाम्यलिंगाच्चेति । सर्वाविद्योपाधिविनिर्मुक्तस्यैव भेदोपपादनात् । श्रुतिस्मृतिसूत्रेषु सर्वत्र भेदनिर्देशे चिदचिदीश्वररूपभेदः स्वाभाविको विवक्षित इति निश्चीयते । सर्वं खल्विदं ब्रह्म, तज्जलानिति, शान्त उपासीत, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत, सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, ऐतदात्म्यमिदं सर्वम्, तत्सत्यम्, स आत्मा, तत्त्वमसि श्वेतकेतो, क्षेत्रज्ञं चापि मां विद्धि, तदनन्यत्वमारम्भणशब्दादिभ्य इति परस्य ब्रह्मणः कारणत्वं, कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य कार्यत्वम् । कारणात् कार्यस्यानन्यत्वं चोच्यमानमेवोपपद्यते । सर्वावस्थचिदऽचिद्वस्तुनः परमात्मशरीरत्वं, परमात्मनश्चात्मत्वम् । यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद यस्य पृथिवी शरीरं, यश्चात्मनि तिष्ठन् यस्यात्मा शरीरमिति, यस्याव्यक्तं शरीरम्, एष सर्वभूतान्तरात्मा अपहतपाप्मा, दिव्यो देव एको नारायणः, अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा इत्यादिश्रुत्यैवोपदिष्टमिति । सूक्ष्मचिदचिद्वस्तुशरीरः परमात्मा कारणम् । स एव परमात्मा स्थूलचिदचिद्वस्तुशरीरः कार्यमिति कारणावस्थायां कार्यावस्थायां च चिदचिद्वस्तुशरीरतया तत्प्रकारः परमात्मैव सर्वशब्दवाच्य इति परमात्मशब्देन सर्वशब्दसमानाधिकरणत्वं मुख्यमेवोपपन्नतरम् । अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतिरेवेममर्थमुपपादयति । सर्वात्मतयाऽनुप्रविश्य तच्छरीरत्वेन सर्वप्रकारतया स एव सर्वशब्दवाच्यो भवतीत्यर्थः । बहु स्यामिति बहुभवनसंकल्पोऽपि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरतया

एकधाऽवस्थितस्य विभक्तनामरूपचिदचिद्वस्तुशरीरतया बहुप्रकारताविषय इति हि वेदवित्प्रक्रिया ॥ ये पुनर्निर्विशेषं कूटस्थं स्वप्रकाशं नित्यचैन्यमात्रं ब्रह्म ज्ञातव्यतयैवोक्तमिति वदन्ति तेषां, जन्माद्यस्य यतः, शास्त्रयोनित्वात्, तत्तु समन्वयात्, ईक्षतेर्नाऽशब्दम्, जगद्व्यापारवर्जम्, भोगमात्रसाम्यलिङ्गाच्चेत्यादिसूत्रगणस्य ब्रह्मणो जगत्कारणत्वस्य बहुभवनसंकल्परूपेणेक्षणाद्यनन्तविशेषप्रतिपादनपरत्वात् तानि सूत्राणि; यतो वा इमानि भूतानि जायन्ते, तदैक्षत बहु स्यां प्रजायेयेत्याद्याः सर्वाः श्रुतयश्च न संगच्छन्ते । अथोच्यते, येनाश्रुतमिति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय यथा सोम्यैकेन मृत्पिण्डेनेत्येकमृत्पिण्डारब्धघटशरावादीनां मृत्पिण्डादनन्यतया तज्ज्ञानेनैव तेषां ज्ञानं, तथैव ब्रह्मज्ञानेन तदारब्धस्य कृत्स्नस्य चिदचिदात्मकस्य जगतस्तदनतिरिक्तवस्तुतया ज्ञानता संभवतीति उपपाद्य, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति इदं शब्दस्य चिदचिदात्मकस्य प्रपञ्चस्य सृष्टेः प्राग् निखिलभेदप्रहाणेन सच्छब्दवाच्यतयैकधापत्तिं घटशरावाद्युत्पत्तेः प्राग् उत्पादकमृत्पिण्डैकधापत्तिवदभिधाय, तदैक्षत, बहु स्यां प्रजायेयेति, तत्तेजोऽसृजतेत्यादिना तदेव सच्छब्दवाच्यं परं ब्रह्म चिदचिदात्मकप्रपञ्चस्वरूपेण आत्मनो बहुभवनम्, एकमृत्पिण्डस्य घटशरावादिरूपेण बहुभवनवत् सङ्कल्प्याऽऽत्मानमेव तेजःप्रभृतिजगदाकारेणासृजतेति चाभिधाय, ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा तत्त्वमसीत्यभिधानात् । ब्रह्मैकमेव अविद्याकृतेन अपारमार्थिकेन उपाधिना सम्बद्धं देवादिरूपेण बहुभूतमिति वैदिकैरभ्युपगन्तव्यमिति यत्तदयुक्तम् । ज्ञाऽज्ञौ द्वावजावीशानीशौ, नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान् इत्यादिश्रुतिभिर्जीवानामजत्वनित्यत्वबहुत्ववचनात् ।

यदि घटशरावादेरुत्पत्तेः प्रागेकीभूतस्य मृद्द्रव्यस्य उत्पत्त्युत्तरकालभाविबहुत्ववत्सृष्टेः प्रागेकीभूतस्यैव ब्रह्मणः सृष्ट्युत्तरकालनानाविधजीवरूपेण बहुत्वमुच्येत तदा जीवानामजत्वनित्यत्वबहुत्वादि विरुध्येत, पूर्वोक्तसूत्रविरोधश्च । इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति ब्रह्मैव देवमनुष्यादिजीवरूपेण बहुभूतं चेत्तदात्मनो हिताकरणादिदोषप्रसक्तिरित्युक्त्वा, अधिकं तु भेदनिर्देशादिति जीवाद्ब्रह्मणोऽर्थान्तरत्वमुक्तम्।तथाच, वैषम्यनैर्घृण्ये न सापेक्षत्वादिति देवादिविषमसृष्टिप्रयुक्तपक्षपातवैषम्यनैर्घृण्ये न, सापेक्षत्वादिति जीवानां पूर्वपूर्वकर्मापेक्षितत्वाद् विषमसृष्टेरिति परिहृते; तथा, न कर्माविभागादितिचेन्नानादित्वाद्, उपपद्यते चाप्युपलभ्यते चेति, सदेव सोम्येदमग्र आसदेकमेवाद्वितीयमिति सृष्टेः प्रागविभागवचनात् सृष्टेः प्राग् जीवानामभावात् तत्कर्म न संभवतीति परिचोद्य जीवानां तत्तत्कर्मप्रवाहाणां चानादित्वादिति परिहृतम् । नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य इत्यात्मन उत्पत्त्यभावश्चोक्तः । नित्यत्वं चामोक्षाज्जीवभेदस्यानादित्वं सर्वैरिष्टं हि वेदान्तवादिभिरभ्युपगम्यते । अतः सूत्रविरोधात् स्वाभ्युपगमविरोधाच्च सृष्टेः प्रागेकत्वावधारणं नामरूपविभागानर्हाभिप्रायम् । नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुभेदसहं चेति सर्वैरेवाभ्युपगम्यते । इयाँस्तु विशेषः । अविद्याकल्पनेऽपि उपाधिकल्पनेऽपि ब्रह्मव्यतिरिक्तस्य अविद्यासम्बन्धिनश्च उपाधिसम्बन्धिनश्च चेतनस्याऽभावाद् अविद्योपाधिसंबन्धे तत्कृताश्च दोषा ब्रह्मण्येव भवेयुरिति । सन्मात्रब्रह्मवादेऽपि प्राक् सृष्टेः सन्मात्रं ब्रह्मैकमेव सृष्ट्युत्तरकाले भोक्तृभोग्यनियन्तृरूपेण त्रिधाभूतं चेद् घटशरावमणिकवज्जीवेश्वरयोरपि उत्पत्तिमत्त्वमनित्यत्वं च स्यात् । अथैकधापत्तिवेलायामपि भोक्तृभोग्यनियन्तृशक्तित्रयमवस्थितमिति चेत् । किमिदं शक्ति-

त्रयशब्दवाच्यमिति विवेचनीयम् । यदि सन्मात्रस्यैकस्यैव भोक्तृभोग्यनियन्तृरूपेण परिणामसामर्थ्यं शक्तित्रयशब्दवाच्यम्, एवं तर्हि मृत्पिण्डस्य घटशरावादिपरिणामसमर्थस्य तदुत्पादकत्वमिव ब्रह्मण ईश्वरादीनामुत्पादकत्वमिति तेषामभ्युपगमे च तदुत्पाद्यतयेश्वरादीनामनित्यत्वप्रसङ्गाच्च । त्रयाणां नामरूपविभागानर्हसूक्ष्मदशापत्तिरेव प्राक् सृष्टेरेकत्वावधारणावस्थेयमिति वक्तव्यम् । तथा तेषामब्रह्मात्मकत्वादेकत्वावधारणं विरुद्ध्येत । अतः सर्वावस्थचिदचिद्वस्तुनो ब्रह्मशरीरत्वश्रुतेः सर्वदा सर्वशब्दैर्ब्रह्मैव तत्तच्छरीरतया तत्तद्विशिष्टमेवाभिधेयमिति स्थूलचिदचिद्वस्तुविशिष्टं ब्रह्मैव कार्यभूतं जगत् । नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्मैव कारणमिति तदेव मृत्पिण्डस्थानीयं, सदेव सोम्येदमग्र आसीद् एकमेवाऽद्वितीयमित्युच्यते । तदेव विभक्तनामरूपचिदऽचिद्वस्तुविशिष्टं कार्यमिति सर्वं समञ्जसमिति । श्रुतिन्यायविरोधश्च तेषां भाष्ये प्रपञ्चित इति नेह प्रतन्यते ॥ इति श्रीरामाऽनुजमतविवेकः ॥

अथ श्रीनिम्बादित्याचार्यस्य भेदाभेदमतम् ।

तथाहि—

> ज्ञानस्वरूपं च हरेरधीनं
> शरीरसंयोगवियोगयोग्यम् ॥
> अणुं हि जीवं प्रतिदेहभिन्नं
> ज्ञातृत्ववन्तं यदनन्तमाहुः ॥

अस्यार्थः । ज्ञानं चेतनं स्वयञ्ज्योतिःस्वरूपं करणव्यापारायत्तप्रकाशशून्यम् । तेषामपि प्रकाशकत्वात् । अनेन तार्किकादिपक्षो व्यावर्त्यते । चकारो देहादिवर्गवैलक्षण्यसमुच्चयार्थको बाह्यपक्षनिरसनपरः । बद्धानां विशेषमाह ॥ शरीरसंयोगवियोगयो-

ज्यमिति ॥ अत्र शरीरशब्दस्तु तत्कारणभूताऽनादिकर्मात्मकाविद्योपलक्षणार्थः । कार्यकारणयोरभेदात् । अनादिकर्मरूपाविद्यावच्छेदलक्षणबन्धार्हत्वे सति तन्निवृत्तिपूर्वकभगवद्भावाप्तिलक्षणमोक्षार्हमिति यावत् । किंपरिमाणकोऽसौ प्रत्यगात्मा इत्याशङ्कायां, वैभवमाध्यमपरिमाणवादितार्किकादिबाह्यादिपक्षौ निराकरोति ॥ अणुमिति ॥ अणुपरिमाणकमिति यावत् । एषोऽणुरात्मा चेतसा वेदितव्य इत्यादिश्रुतेः । यत्तूक्तं– विभुरात्मेति । तत्तुच्छम् । तथाहि । विभुत्वे बहुत्वम् । एकत्वं वा प्रत्यगात्मन इति विवेचनीयम् । नाद्यः । सर्वेषामपि विभूनां प्रत्यगात्मनां सर्वमूर्तसंयोगत्वाविशेषात् सर्वैर्मनोभिः सह नित्यसंयुक्तम् । तथा च सर्वेषां सर्वान्तरवृत्तिज्ञातृत्वापत्तेः । अहं त्वमयमिति प्रत्ययानां विनिगमनाविरहेण विभागाभावापत्तेश्च । आत्मत्वेन मनःसंयोगवत्त्वेन च विशेषाभावात् । नचात्मत्वसाम्येऽपि तत्तत्कर्मजन्यसंस्कारविशिष्टमनोवैलक्षण्यादीनां परस्परं भिन्नत्वेन नियामकानां सत्त्वान्नोक्तदोषावकाश इति वाच्यम् । तत्तत्कर्माऽदृष्टादीनामपि नियामकत्वेनाऽभ्युगतानां परस्परं भिन्नानामपि सर्वेषामात्मसम्बन्धाविशेषात् । तत्राप्यन्यकल्पनेऽनवस्थापत्तेश्च । न द्वितीयः । तत्राप्येकस्य विभोरात्मनः सर्वैरन्तःकरणरूपोपाधिभिरवच्छिन्नत्वात् सर्वेषामुपहितानां सर्वज्ञातृत्वं समानम् । अन्यथा स्वस्य चैकैकस्मिन् देशे वर्तमानानाम् अन्तःकरणानां सम्बन्धेन तत्तद्दुःखाद्यननुभवत्वाभ्युपगमे देवदत्तस्य स्वशिरःपादाद्यवयववृत्तिवेदनाऽनुसन्धानाभावप्रसङ्गात् ॥

प्रतिदेहभिन्नमिति॥देहं देहं प्रति भिन्नं प्रतिदेहभिन्नं, ब्रह्मादिस्थावरान्तेषु चतुर्विधेष्वपि देहेषु स्वरूपेणैव भिन्नमिति यावत्।एतेन प्रत्यगात्मनां मिथोभेदसिद्ध्या एकजीववादोऽपि निरस्तः। अन्यथा

एकस्मिन्नपि सुप्ते मूर्च्छिते वा निखिलस्याऽप्रतीत्यापत्तिः । एतेनैव सुखादिगुणसाङ्कर्यशङ्काऽपि दूरतो निरस्ता भवति ॥ ज्ञातृत्ववन्तामिति ॥ ज्ञानाश्रयम् । द्रष्टा भोक्ता श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुष इति श्रुतेः ॥ यदनन्तमाहुरिति ॥ जीवसंख्यानिरूपितावसानशून्यम् । असंख्याकमिति यावत् ॥

एवं तावत् प्रत्यगात्मनां स्वरूपगुणपरिमाणसंख्याविशेषेषु प्रमाणपूर्वकं निरूपितेषु सत्सु तथाभूतप्रमाणसिद्धस्वरूपकपरमार्थसद्वस्तु चेत् कथं नानुभूयते इति शङ्कां परिहरन् विशिनष्टि ।

अनादिमायापरियुक्तरूपं
त्वेनं विदुर्वै भगवत्प्रसादात् ॥
मुक्तं च बद्धं किल बद्धमुक्तम्
प्रभेदबाहुल्यमथापि बोध्यम् ॥

अघटघटनापटीयस्या मायया गुणमय्या परियुक्तम् । परिवेष्टितसंकुचितरूपम् । श्रीभगवतः पुरुषोत्तमात् पराङ्मुखतया अनादिकर्मकाविद्यावच्छिन्नत्वाद् देहेन्द्रियादिलक्षणमायागुणाब्धितरङ्गार्दितस्वरूपत्वेन अत्यन्तसंकुचितज्ञानत्वान्नानुभूयते इत्यर्थः । नन्वेवं तर्हि, गौरनाद्यन्तवतीत्यादिश्रुतेर्मायागुणप्रवाहस्यानाद्यन्तत्वात् कदाचिदपि तज्ज्ञानं न स्यात् । तथात्वे च तज्जिज्ञासायास्तत्प्रतिपादकशास्त्रस्य च वैयर्थ्यं स्यादत आह ॥ एनमिति ॥ एनं प्रमाणसिद्धमपि प्रत्यगात्मानं श्रीभगवतः पुरुषोत्तमस्यानुग्रहाद्विदुः । भगवदीयानादिमायाविमुक्तसत्संप्रदायानुयायिन इति शेषः । एतदुक्तं भवति । मायाया अनाद्यनन्तत्वेऽपि क्षेत्रज्ञविशेषविषयकर्मनिमित्तकबन्धमोक्षयोरीश्वरस्यैव प्रदातृत्वेन नियामकत्वं न मायायाः । संसारबन्धस्थितिमोक्षहेतुरित्यादिश्रुतेः । तस्मात्त-

द्विषयकज्ञानसंकोचलक्षणाऽज्ञाननिवृत्तौ तज्ज्ञानविकाशो भवत्येव। घटस्थदीपस्य तदात्मकप्रतिबन्धसंकुचितप्रभस्य घटात्मकप्रतिबन्धनिवृत्तौ तत्प्रभाप्रकाशवत् । तस्माज्जिज्ञासायाः सार्थकत्वान्न शास्त्रवैयर्थ्यम् । एतावता जीवात्मस्वरूपादिकं निरूप्य तज्ज्ञानाऽज्ञानकारणं च निर्णीतम् ।इदानीं जीवविशेषं विविनक्ति ॥ मुक्तं चेति ॥ चकारो बद्धसमुच्चायकः । बद्धं चेत्यर्थः ॥ बद्धमुक्तमिति ॥ जीवात्मानस्तावद् द्विविधाः— बद्धमुक्तभेदात् । तत्र बद्धो नाम अनादिकर्मवासनाकार्यतत्तद्देवतिर्यगाद्यनेकविधशरीरेषु आत्मात्मीयत्वाभिमानदार्ढ्यवानिति यावत् ॥

अथाचेतनं निरूप्यते ॥

अप्राकृतं प्राकृतरूपकं च<br>
कालस्वरूपं तदचेतनं मतम् ॥<br>
मायाप्रधानादिपदप्रवाच्यं<br>
शुक्लादिभेदाश्च समेऽपि तत्र ॥

अप्राकृतमित्यादिना ॥ अचेतनं त्रिविधं मतं, श्रुतिभिरित्यन्वयः । त्रैविध्यमेव विविच्यते ॥ अप्राकृतं प्राकृतरूपकं च कालस्वरूपमिति ॥ तत्र तावत् प्राकृतं विशिनष्टि ॥ मायाप्रधानादिपदप्रवाच्यमिति ॥ मायापदैरभिधीयमानं प्राकृतम् । तदेव लक्षणमुखेन द्योतयति ॥ शुक्लादिभेदाश्च समेऽपि तत्रेति ॥ तत्र तस्मिन् प्राकृतपदार्थे समेऽपि सर्वे शुक्लादिभेदाः सन्ति । अथ द्वितीयमाह ॥ कालस्वरूपमिति ॥ प्राकृताप्राकृतोभयभिन्नत्वे सति अचेतनद्रव्यविशेषः कालशब्दवाच्यः । स च नित्यो विभुश्चेति । अथाप्राकृतं निरूप्यते ॥ अप्राकृतमिति ॥ तत्त्वं नाम त्रिगुणाश्रयप्रधानकाद्यविलक्षणं प्रकाशात्मकम् अनावरकत्वस्वभावमचेतनद्रव्यत्वम् । आदित्यवर्णं तमसः परस्तादित्यादिश्रुतेः ।

तमःशब्दाभिधेयाभ्यां प्रधानकालाभ्यां विलक्षणम् । आदित्यवत् प्रकाशस्वरूपमित्यर्थः ॥

स्वभावतोऽपास्तसमस्तदोष-
मशेषकल्याणगुणैकराशिम् ॥
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं
ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥

अस्यार्थः । परमात्मतत्त्वं निरूपयति ॥ स्वभावत इत्यादिना वयं ब्रह्म ध्यायेमेति योजना । ब्रह्मशब्दस्य चतुर्मुखे वेदादावपि वृत्तित्वात् तत्राऽतिप्रसङ्गं वारयन्नाह ॥ परमिति ॥ ब्रह्मपदार्थमाह ॥ कृष्णमिति ॥ परत्वं च क्षराक्षराभ्यामुत्कृष्टत्वम् । तस्याश्रयो भगवान् श्रीकृष्ण एवेति पुनरपि भगवत्पदाऽर्थाभिन्नब्रह्मपदार्थमाह निर्वचनमुखेन ॥ स्वभावत इति ॥ स्वभावेनैव अनादिप्रकृत्यैव अपास्ता निरस्ताः समस्ता दोषा यस्मात् तम् । दोषाश्च 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा' इति पातञ्जलसूत्राद् बोध्याः । नन्वेवं तर्हि गुणदोषवत्त्वाभावान्निर्विशेषाणां कल्याणात्मकानां गुणानामेको मुख्यो यो राशिः पुञ्जभूतस्तम् । अशेषकल्याणगुणानां राशयो यस्मिँस्तमिति ॥ व्यूहाङ्गिनमिति ॥ व्यूहावताराश्चाङ्गानि तान्येव विद्यन्ते यस्य तम् । अनन्तमूर्तिकमित्यर्थः । एवं पूर्णत्वमुक्त्वा सर्वोपास्यत्वमाह ॥ वरेण्यमिति ॥ सौन्दर्यसौकुमार्यमाधुर्यलावण्यादिभिः साधारणत्वेन ब्रह्मादिभिर्वरणीयमित्यर्थः । सौन्दर्यं व्यनक्ति ॥ कमलेक्षणमिति ॥ कमलोपमे ईक्षणे यस्य तं सत्पुण्डरीकनयनम् । यद्वा, कमलया लक्ष्म्या ईक्ष्यते इति कमलेक्षणस्तं सौन्दर्यसीमानमित्यर्थः । अत एव, हरिम् ॥ ध्यातॄणां मनोहरम् ॥

उक्तसिद्धान्ते विधिमाह ॥

उपासनीयं नितरां जनैः सदा ॥
प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ।
सनन्दनाद्यैर्मुनिभिस्तथोक्तम् ॥
श्रीनारदायाऽखिलतत्त्वसाक्षिणे ।

उपासनीयमिति ॥ नितरां मुमुक्षुभिर्जनैरुक्तलक्षणं परं ब्रह्म सदोपासनीयम् । उपासनायाः प्रयोजनमाह ॥ प्रहाणयेऽज्ञानतमोऽनुवृत्तेरिति ॥ अज्ञानतमोऽनुवृत्तेः प्रहाणये इति योजना । ननु, यद् वाचाऽनभ्युदितं येन वागभ्युद्यते * तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते इत्यादिश्रुतेरुपासनाविषयस्य ब्रह्मत्वनिषेधात् कथमेवोपासनाविधानं, कथं वा ब्रह्मण उपास्यत्वमित्याशङ्कानिरासार्थं स्वसंप्रदायसंगतिं प्रणयन् संप्रदायस्यानादित्वं वैदिकत्वं चाह भगवानाचार्यः ॥ सनन्दनाद्यैर्मुनिभिस्तथोक्तमिति ॥ श्रीनारदायाऽस्मद्गुरवे इत्यर्थः । तेनैव मह्यं यदुपदिष्टं तदेवोक्तं मयापीति शेषः । श्रीगुरुं विशिनष्टि ॥ अखिलतत्त्वसाक्षिणे इति ॥ सर्ववेदतत्त्वविषयकप्रत्यक्षानुभवाश्रयभूताय सर्वज्ञायेति । यदिदमुपासते इत्यनेन ब्रह्मण उपास्यतानिषेधस्तु परिच्छिन्नोपासनविषयक एव, न तु विश्वात्मकपरमात्मोपासनविषयक इत्यर्थः ॥

श्रोतव्य इत्यादिश्रुतिवाक्यजन्यज्ञानं निरूपयन् तत्त्वमस्यादिवाक्यस्यार्थमाह ॥

सर्वं हि विज्ञानमतो यथार्थकं
श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ॥
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपताऽपि श्रुतिसूत्रसाधिता ॥

सर्वमिति ॥ हि यस्माद्, निखिलस्य वस्तुनः श्रुतिस्मृतिभ्यो ब्रह्मात्मकत्वादतः सर्वं ज्ञानं यथार्थमित्यन्वयः ।

यतस्त्रिरूपता श्रुतिसूत्रसाधिता तस्मात् साऽपि यथार्थेत्यपिशब्दार्थ इति वेदविन्मतं, वेदविदामौपनिषदानां श्रीव्यासमन्वादीनां मतं निर्णीतोऽर्थः सिद्धान्त इत्यर्थः। एष सर्वभूतान्तरात्मा, एष ते अन्तर्याम्यऽमृतः, इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ॥ वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव चेति। अहमात्मा गुडाकेश सर्वभूताशयस्थित ॥ इत्यादिश्रुतिस्मृतिभ्यः सर्वस्यापि चेतनाचेतनभूतस्य जगतो ब्रह्मात्मकत्वमतः सर्वं विज्ञानं यथार्थमिति। अतः सर्वस्य ब्रह्मात्मकत्वादेव सर्वमिति विज्ञानं यथार्थवस्तुविषयकत्वाद् यथार्थम्। किञ्च भोक्तृभोग्यनियन्तृरूपताऽपि यथार्थेवेति शेषः। अत्र हेतुः— श्रुतिसूत्रसाधितेति॥ तथाच श्रुतिः भोक्ता भोग्यं प्रेरितारं च मत्वेति। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति च। अथाऽतो ब्रह्मजिज्ञासेत्यादिसूत्राण्यप्यनुसन्धेयानि। तत्र जिज्ञासाजिज्ञासुजिज्ञास्यरूपत्रिरूपता प्रसिद्धत्वाद् वेदविन्मतमित्येवं ब्रह्मात्मकत्वं तदायत्तस्थितिप्रवृत्तिकत्वव्याप्यत्वाभ्यां ब्रह्माभिन्नत्वात्, त्रिरूपत्वश्रवणस्मरणाभ्यां स्वरूपेण भिन्नत्वाच्च ब्रह्मभिन्नाभिन्नं चेतनाचेतनात्मकं विश्वमिति वेदविदां श्रीसनकनारदव्यासादीनां मतं=निर्णीतः सिद्धान्त इत्यर्थः। तदनन्यत्वमारम्भणशब्दादिभ्यः। अधिकं तु भेदनिर्देशादित्याद्युभयप्रतिपादनपरेभ्यः सूत्रेभ्यः। एकमेवाद्वितीयम्, आत्मा वा इदमेक एवाग्र आसीत्, तत्त्वमसि, अयमात्मा ब्रह्म, सोऽहम्, अहं ब्रह्माऽस्मि, आत्मैवेदं सर्वं, त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते, यदेवेह तदमुत्र यदमुत्र तदन्विह, योऽसावादित्ये पुरुषः सोऽसावहं, सर्वं खल्विदं ब्रह्मेति, सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः, क्षेत्रज्ञं चाऽपि मां विद्धि, एकः समस्तं यदिहास्ति किञ्चन तदच्युतो नास्ति परं ततोऽन्यत्,

अहं भवो भवन्तश्च सर्वं नारायणात्मका * इत्यभेदप्रतिपादनपरेभ्यः श्रुतिस्मृतिभ्यः, नित्यो नित्यानां चेतनश्चेतनानां, ज्ञाऽज्ञौ द्वावजावीशानीशौ, जुष्टं यदा पश्यत्यन्यमीशं, पृथगात्मानं प्रेरितारं च मत्वेति, प्रधानक्षेत्रज्ञपतिर्गुणेश इति, द्वाविमौ पुरुषौ लोके इत्यादिभेदप्रतिपादकश्रुतिस्मृतिभ्यश्चेति ॥ इति श्रीनिम्बाऽऽदित्याचार्यमतविवेकः ॥

अथ द्वैतमतम् । तथाहि । आत्मैवेदं सर्वमिति, स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीति, खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् * सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्य * इति, यश्चात्मनि तिष्ठन् यमात्मा न वेद यस्यात्मा शरीरमिति, यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद यस्य पृथिवी शरीरमिति श्रुतिस्मृतिभ्यो जीवजडयोर्भगवद्देहत्वेन देहिदेहयोरीश्वरजडजीवरूपयोरभेदान्वयः स्थूलदृष्ट्या, नित्यो नित्यानामित्यादिश्रुत्या च सूक्ष्मदृष्ट्येश्वरस्य जडजीवयोश्च भेद इति । श्रुतिस्मृत्यर्थस्तु इदं सर्वं विश्वम् आत्मैव, तदचिच्छरीरत्वात् । एवं मन्वान एष शुद्धो जीव एवं विशेषणं जानन् पश्यन् आत्मरतिर्भवति । आत्मनि परमात्मनि भगवति रतिर्भक्तिर्यस्य स आत्मरतिः, स एवात्मक्रीडो भवति आत्मनि भगवति क्रीडा यस्य स आत्मक्रीडः ॥

स आत्ममिथुनो भवति । आत्मना भगवता ब्रह्मणा सह मिथुनं स्वामिसेवकलक्षणं द्वितीयत्वं यस्य स आत्ममिथुन एवंभूतः स भगवदीयः स्वराड् भवति इति । हरेः श्रीकृष्णस्य भगवतश्चैतन्यविग्रहस्य इदं विश्वम् अचिच्छरीरमिति मत्वा प्रणमेदिति। तथा चैक एव चिदचिद्विग्रहो भगवान् सेव्यः, एक एवाऽहं सेवक इति फलि-

तम् । तत्र प्रमाणं, सर्वं खल्विदं ब्रह्म, तज्जलानिति, शान्त उपासीतेति श्रुतिः। मनो ब्रह्मोपासीत, अहं ब्रह्मास्मीति श्रुतिस्तु स्वस्मिन् मनसि वा ब्रह्मभावनया ब्रह्मोपासीतेत्यर्थपरा । एवमेवाभेदप्रतिपादकानि अन्यान्यपि वाक्यानि भावनापराणीति ॥ तत्त्वमसि, अहं ब्रह्मास्मीत्यादिषु जीवस्य परेणाभेदः प्रतीयते । नित्यो नित्यानां चेतनश्चेतनानां, द्वा सुपर्णेत्यादिषु भेद उच्यते । पृथगुपदेशात् । भिन्नोऽचिन्त्यः परमो जीवसंघात्, पूर्णः परो जीवसंघात् त्वपूर्णः, यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेदिति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीव इत्यर्थः । स च भेदः पञ्चविधः । तथाहि– जीवेश्वरभिदा चैवं जडेश्वरभिदा तथा * जीवभेदो मिथश्चैवं जडजीवभिदा तथा * मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चक * इति। तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवदिति सूत्रम् । अस्यार्थः । ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारस्वरूपमतोऽभेदव्यपदेशो, यथा सर्वगुणात्मकत्वात् सर्वात्मकत्वं ब्रह्मण उच्यते, सर्वं खल्विदं ब्रह्मेति । भविष्यपर्वणि च, भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः * प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वश इति । नामानि विश्वानि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् * नामानि सर्वाणि यमाविशन्ति तं चैव विष्णुं परमुदाहरन्तीति भाल्लवेयश्रुत्या, अथातो ब्रह्मजिज्ञासेत्यादौ ब्रह्मपदेन विष्णोरेव ग्रहणम्, न तु रुद्रादीनाम् । तत्प्रापकशब्दानां विष्णोरेव मुख्यार्थत्वादिति । श्रुतेरर्थस्तु सर्वाणि नामानि रुद्रादीनि जगति मुख्यतो न सन्ति, यतो विष्णवितरस्य जगतः सर्वनामप्रवृत्तिनिमित्तं विष्णुं वदन्ति विद्वांसः ॥ इति श्रीमध्वाचार्यमतविवेकः ॥

इति श्रीसकलवैष्णवाचार्यमतसङ्ग्रहः सम्पूर्णः ॥

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषा-निबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवा-दसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकी-यसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्रा-हकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदे-कैकस्य खण्डस्य कृते ।॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्म-हाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डान कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३। द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रवचन-भाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम ) ख० ८ — ८ ०

वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ — ३ ०

टुप्टीका खण्डानि ४ — ४ ०

पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति स० — १ ०

व्याकरण मिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि १० — १० ०

रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ — ३ ०

भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रम पराक्रमसहितः खण्डे २ — २ ०

बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० — १० ०

ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिरचिता खण्डे २ — २ ०

दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३ — ३ ०

श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि १५ — १५ ०

तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा—तत्त्वत्रयचुलुक-संग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । — १ ०

श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्र-तिपादनपरम् । यतीन्द्रमतदीपिका च । श्रीगोविन्दाचार्यसूनु-श्रीनिवासाचार्यकृता । सकलाचार्यमतसंग्रहश्च । खण्डे २ — २ ०

गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायी-व्याख्या । — १ ०

आश्वलायनसूत्रप्रयोगदीपिका । श्रीविद्वद्वरमंचनाचार्यभट्ट-विरचिता । — १ ०

व्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस सिटी

